# ऐसे सफ़ेद-जैसे नये!

धुलाई-दर-धुलाई... प्रति धुलाई.
पावर पैक्ड सर्फ़ कपड़े धोए ऐसे सफ़ेद–जैसे नये!

हर कमीज़, हर चादर सदा लगे कोरी-कोरी, शानदार, सफ़ेद. बिल्कुल वैसी ही नयी जैसे अभी-अभी पैकेट से निकली.

क्योंकि पावर पैक्ड सर्फ़ पहले से कहीं ज़्यादा बेहतर है... इसमें झाग भी पहले से कहीं ज़्यादा है.

सर्फ़ में अड़ियल से अड़ियल मैल को निकाल बाहर करने की अधिक शक्ति है...और अधिक सुरक्षा जिससे कपड़े बने रहते हैं सदा नए!

जी हां, कपड़े सफ़ेद हों या रंगीन, खास मौकों के या रोज़ाना के इन्हें सदा नये जैसे बनाए रखने के लिए एक ही पाउडर है...सर्फ़.




## सर्फ़ की धुलाई सबसे सफ़ेद... कपड़े दिखते सदा नये!

हिन्दुस्तान लीवर का एक उत्कृष्ट उत्पादन.

LINTAS SU 331 2116 HI

# विनयावनतिः

यात्रा मया सर्वगता हृता ते
ध्यानेन चेतःपरता हृता ते।
स्तुत्यानया वाक्परता हृता ते
क्षन्तव्यमेतत् त्रयम् एव शम्भो॥

(शङ्करभगवत्पादाः)

भारते भूमौ अध्यात्मचिन्तनं श्वासोच्छ्वासः इव सहजम्। एवम् एव अध्यात्मचिन्तनस्य पराकाष्ठा कुत्रापि दृष्टा चेत् सा भरतभूमौ एव। एतादृश्यां भूमौ जातेषु अन्यतमाः शङ्करभगवत्पादाः।

शङ्करभगवत्पादानां तु विशिष्टं सामाजिकचिन्तनम्। 'न बुद्धिभेदं जनयेत् अज्ञानां कर्मसङ्गिनाम्' इति हि गीतावाक्यं तेषाम् आदर्शः। अतः एव ते 'ब्रह्म सत्यं, तत् निर्गुणं निराकारं च' इति जानन्तः, सयुक्तिकं प्रतिपादयन्तः च अपि सगुणपूजां व्यवहारे आनीतवन्तः। स्वयं शारदापीठानि स्थापितवन्तः च।

ते शङ्करं प्रार्थयन्ति- ''जगदीश्वर! भवान् सर्वगतः इति अहं जानामि। तथापि तीर्थयात्रां कृतवान्। भवान् सर्वेषां हृदि सर्वदा निवसति इत्यपि जानामि। तथापि असकृत् भवतः ध्यानं कृतवान्। भवान् सर्वेषां वचनेषु तिष्ठति इत्यपि अहं जानामि एव। तथापि एवं भवतः स्तुतिं कुर्वन् अस्मि। एवं कायेन वाचा मनसा अहम् अपराधं कृतवान्। कृपया क्षाम्यतु'' इति।

अहो! उन्नतानाम् आचार्याणाम् अपि विनयावनतिः! अहो! विनयप्रस्तुतीकरणमाधुरी!

# सङ्ख्येयाः (Numerals)

शिष्यः - आचार्य ! 'Fifth Girl' इत्यर्थे 'पञ्चमा बालिका' इति साधु वा ? उत 'पञ्चमी बालिका' इति ?

आचार्यः - पञ्चमी इत्येव साधु रूपम् ।

शि - प्रथमा, द्वितीया.... इत्यादिषु आकारः । पञ्चमी षष्ठी.... इति ईकारः । एवं तर्हि कापि सुलभव्यवस्था....?

आ - अस्ति एव सुलभव्यवस्था । क्रमशः गच्छाम ।
प्रथमः, द्वितीयः, तृतीयः, चतुर्थः, पञ्चमः, षष्ठः, (न षष्टः, न वा षष्ठमः) सप्तमः.... दशमः इति एतावत्पर्यन्तं सुलभतया ज्ञातुं शक्यते । तदनन्तरम् एकादशः, द्वादशः.... सप्तदशः.... नवदशः इत्यादीनि । एवम् एतानि विसर्गसहितानि सङ्ख्येयं बोधयन्ति । विसर्गरहितानि तु सङ्ख्याम् ।

शि - एवं तर्हि एकादशतमः, पञ्चदशतमः इत्यादीनि रूपाणि अयुक्तानि वा ?.

आ - त्वरा किमर्थम् ? शृणोतु । विंशतितः पूर्वं तमट् प्रत्ययः (तमट्=तम) न योजनीयः । विंशत्यनन्तरं सर्वत्र योजनीयः । विंशत्यनन्तरं विकल्पेन तमट् अस्ति । तथापि तमट् योजितः चेत् न दोषाय । अतः 'विंशतितः पूर्वं न तमट्, विंशत्यनन्तरं सर्वत्र तमट्' इति एषः नियमः आश्रितः चेत् कुत्रापि दोषस्य न अवकाशः । यथा-विंशतितमः.... पञ्चविंशतितमः.... पञ्चत्रिंशत्तमः.... षडशीतितमः.... शततमः.... ।

शि - सङ्ख्येयानां लिङ्गभेदेः रूपभेदः अस्ति किल ? अतः तत्र रूपनिर्णयः कथम् ?

आ - पुल्लिङ्गनपुंसकलिङ्गयोः तु साम्यम् । यथा प्रथमः/ प्रथमम्, दशमः/ दशमम्, त्रिंशत्तमः/ त्रिंशत्तमम्, नवाशीतितमः/ नवाशीतितमम् ।
स्त्रीलिङ्गे तु- प्रथमा, द्वितीया तृतीया- इति त्रिषु स्थलेषु आकारः । इतरत्र सर्वत्र ईकारः । यथा- चतुर्थी, दशमी, अष्टादशी, पञ्चविंशतितमी, अशीतितमी.........तमी ।

शि - एवं तर्हि चतुर्था बालिका, विंशतितमा लता, इत्यादयः प्रयोगाः असाधवः इत्येव ?

आ - अथ किम् ? चतुर्थी, विंशतितमी, इत्येव युक्तं रूपम्।

शि - श्रीमन् ! कश्चित् 'भवतः जन्मदिनाङ्कः कः' इति पृच्छति चेत् 'विंशतितमः' 'नवमः' इत्येव वक्तव्यं किल ? न तु 'विंशतिः' 'नव' इति।

आ - आम्, जन्म-दिनाङ्कः इत्यस्य विशेषणत्वेन किल अत्र प्रयोगः ? अतः सङ्ख्येयकथनम् एव उचितः मार्गः। दिनाङ्ककथने अपि एवम् एव। नवमः पञ्चदशः विंशतितमः इत्येव उचितम्।

शि - वयं नगरे वसाम इत्यतः नगरयानानां (City Bus) सूचने क्लेशम् अनुभवामः। सङ्ख्यायाः सङ्ख्यावतः च व्यवहारे अभेदः अस्ति। तथापि तत्र नवदशम् आगतम्, त्रिंशतितमम् आगतम्, षष्टितमम् आगतम् इत्येव प्रयोगः किल ?

आ - तथा प्रयोगः कृतः चेत् दोषस्य न अवकाशः। किन्तु सङ्ख्यापरतया अपि प्रयोगः एतत्सन्दर्भे कुत्रचित् शक्यः।

शि - भवतः कथनस्य आशयं स्पष्टतया न ज्ञातवान् अहम्।

आ - विंशत्यनन्तरं सङ्ख्यायाः सङ्ख्येयपरत्वम्[1] अपि अस्ति। अतः विंशतिः आगता, विंशतितमम् आगतम् इति उभयथा अपि प्रयोगः उचितः एव। किन्तु जागरूकता भवतु यत् एवम् उभयथा प्रयोगः विंशत्यनन्तरम् एव, न तु ततः पूर्वम्। अतः 'पञ्चदश (विसर्गरहितं रूपम्) आगतम्' इत्यादिरूपेण न वक्तव्यम्। एतदपेक्षया यानकथने दिनाङ्ककथने च सङ्ख्येयस्य आश्रयणं सुलभतरः मार्गः।

शि - 'त्रिंशतिः आगतम्' (यानम्) इति तु दोषाय एव किल ?

आ - आम् आम्, विंशत्यादयः सङ्ख्याशब्दाः नित्यस्त्रीलिङ्गाः एकवचनान्ताः च। अतः विंशतिः आगता, षष्टिः आगता इत्येव शुद्धः प्रयोगः।

---

1 'आदशभ्यः सङ्ख्याः सङ्ख्येये वर्तन्ते, तत ऊर्ध्वं सङ्ख्येये सङ्ख्याने च'

—कैयटवचनम्

## Statement about ownership of CHANDAMAMA (Sanskrit) Rule 8 (Form VI), Newspapers (Central) Rules, 1956

| | |
|---|---|
| *1. Place of Publication* | ... 'CHANDAMAMA BUILDINGS'<br>188 N.S.K. Salai<br>Vadapalani, Madras-600 026 |
| *2. Periodicity of Publication* | ... MONTHLY<br>... 1st of each calendar month |
| *3 Printer's Name* | ... B.V. REDDI |
| *Nationality* | ... INDIAN |
| *Address* | ... Prasad Process Private Limited<br>188, N.S.K. Salai<br>Vadapalani, Madras-600 026 |
| *4. Publisher's Name* | ... B. VISWANATHA REDDI |
| *Nationality* | ... INDIAN |
| *Address* | ... Chandamama Publications<br>188 N.S.K. Salai<br>Vadapalani, Madras-600 026 |
| *5. Editor's Name* | ... B. NAGI REDDI |
| *Nationality* | ... INDIAN |
| *Address* | ... Chandamama Buildings'<br>188 N.S.K. Salai<br>Vadapalani, Madras-600 026 |
| *6. Name and Address of individuals who own the paper* | ... CHANDAMAMA PUBLICATIONS<br>PARTNERS<br><br>1. B. VENKATRAMA REDDY<br>2. B.V. SANJAY REDDY<br>3. B.V. NARESH REDDY<br>4. B. PADMAVATHI<br>5. B. VASUNDHARA |

I. B. Viswanatha Reddi, hereby declare that the particulars given above are true to the best of my knowledge and belief.

*1st March 1986*

**B. VISWANATHA REDDI**
*Signature of the Publisher*

# चन्दमामा

संस्थापकः 'चक्रपाणिः' सञ्चालकः 'नागिरेड्डी'

आंग्लपद्धतेः अनुसारम् इदानीं वर्षारम्भः जनवरीतः। चान्द्रमानानुगुणं चैत्रमासतः, सौरमानानुगुणं मेषमासतः च वर्षारम्भः। पूर्वम् आंग्लपद्धतेः अनुगुणम् एव वर्षारम्भः एतस्मात् मासतः-मार्चमासतः-आसीत्।

'मार्च' शब्दस्य अर्थः 'अग्रेगमनम्' इति। वर्षारम्भः बोधयति- "इतःपरम् आवर्षम् अग्रे सरतु" इति। "हे मानव! केवलम् ऐहिकभोगसम्पादनं भवतः जीवनलक्ष्यं न। जीवने कमपि आदर्शं परिकल्प्य तत्साधनार्थं प्रगितपथे दृढानि पदानि स्थापयतु। तदा एव जीवनस्य सार्थक्यम्" इत्येतं अर्थगर्भितं तत्त्वं बोधयति एषः मासः। अमुम् एव भावं वैदिकं वाक्यम् एकं रमणीयैः पदैः प्रकटयति- "उद्-यानं ते पुरुष! नावयानम्" इति। "हे पुरुष भवतः गमनम् उन्नतिं पुरस्कृत्य। न तु अवनतिम् अभिलक्ष्य" इति एतस्य वाक्यस्य अर्थः। यस्य मनः सिद्धं तस्मै जगति विद्यमानानि सर्वाणि चराचरवस्तूनि, व्यवहारार्थं कल्पितानि मास-दिन-क्षणादीनि अपि प्रेरणादायीनि एव।

सम्पुटः-२ मार्च-८६ सञ्चिका-१२

प्रतिकृतिमूल्यम्- रू. २-५० वार्षिकं ग्राहकशुल्कम्- रू. ३०/-






रसप्रश्ना:–

# एतेषां कः क्रमः?

[अधः विभिन्नाः गणा सूचिताः सन्ति। गणस्थानां पदानां कश्चन पौर्वापर्यक्रमः अस्ति। तदनुगुणम् एतान् योजयन्तु।]

I १. अरण्यकाण्डम् २. अयोध्याकाण्डम् ३. बालकाण्डम् ४. सुन्दरकाण्डम् ५. युद्धकाण्डम् ६. किष्किन्धाकाण्डम्

II १. लवः २. दशरथः ३. अजः ४. रामः ५. दिलीपः ६. अग्निवर्णः

III १. आनन्दवर्धनः २. वामनः ३. अभिनवगुप्तः ४. दण्डी ५. जगन्नाथः

IV १. पतञ्जलिः २. पाणिनिः ३. नागेशः ४. भट्टोजिदीक्षितः ५. वररुचिः ६. शाकल्यः

V १. मत्स्यः २. वराहः ३. कूर्मः ४. वामनः ५. कल्किः ६. बुद्धः

VI १. नकुलः २. अर्जुनः ३. भीमसेनः ४. धर्मराजः ५. सहदेवः

VII १. अतलः २. पातालः ३. सुतलः ४. रसातलः ५. महातलः ६. तलातलः ७. वितलः

VIII १. ऋषभः २. निषाधः ३. मध्यमः ४. गान्धारः ५. षड्जः ६. धैवतः ७. पञ्चमः

IX १. पृथिवी २. वायुः ३. जलम् ४. आकाशः ५. तेजः

X १. नियमः २. यमः ३. आसनम् ४. समाधिः ५. धारणम् ६. ध्यानम् ७. प्राणायामः ८. प्रत्याहारः

उत्तराणि–

I ३. २. १. ६. ४. ५. II ५. ३. २. ४. १. ६.
III ४. २. १. ३. ५. IV ६. २. १. ५. ४. ३.
V १. ३. २. ४. ६. ५. VI ४. ३. २. १. ५.
VII १. ७. ३. ४. ६. ५. २. VIII ५. १. ४. ३. ७. ६. २.
IX १. ३. ५. २. ४. X २. १. ३. ७. ८. ६. ५. ४.

## रसवार्ताः

### अहो ! अन्विष्टा महानौका !



१९१२तमे वत्सरे एप्रिल्-१५ दिनाङ्के तेषु दिनेषु महानौकात्वेन प्रसिद्धा 'टिटानिर्'नौका समुद्रे निमग्ना अभवत्। तस्यां स्थितेषु २२२४ यात्रिकेषु १५१३ जनाः जले निमग्नाः ! "जले निमग्ना एषा नौका अट्लाण्टिक्सागरे २.५ मैल् अन्तराले अस्ति" इति अमेरिकादेशीया काचित् नौकासंशोधनसंस्था अन्विष्टवती ।

### समन्तनामकं वज्रम्

अमेरिकादेशीया 'समन्ता' नाम विद्यार्थिनी 'विश्वशान्त्यर्थं कार्यं करणीयम्' इति रशियानायकान् प्रति पत्रं लिखितवती । बालिकायाः एतेन मनोभावेन वशीकृताः रशियानायकाः १९८३तमे वत्सरे तां स्वदेशं प्रति आहूतवन्तः । १९८५तमे वत्सरे प्रवृत्ते विमानापघाते सा दिवङ्गता । एतस्याः बालिकायाः स्मरणार्थं सैबीरियाप्रदेशे प्राप्तस्य अतिमहतः वज्रस्य नाम 'समन्तवज्रम्' इति निश्चितम् अस्ति ।





### महोन्नतः पुरुषः

पाकिस्थानीयः 'अलन्चन्ना' नामकः महाकारः पुरुषः न्यूयार्क्-नगरस्य मार्गेषु सञ्चरन् जनान् आश्चर्यचकितान् कृतवान् । ८फूट् औन्नत्यम् एतस्य ! जनानां मध्ये एषः पर्वत इव दृश्यते स्म । एतं दृष्ट्वा कुतूहलेन जनाः परितः सम्मिलितवन्तः । दूरदर्शकजनाः अपि एतां घटनां चित्रीकृत्य प्रसारितवन्तः ।

## भवन्तः जानन्ति वा ?

१. हिन्दूमहासागरे अतिविशालं द्वीपं किम् ?
२. मध्यधरासागरे अतिविशालं द्वीपं किम् ?
३. १९८१तमे वत्सरे अग्निपर्वतस्य स्फोटनेन अट्लाण्टिक्सागरे स्थितः किञ्चन द्वीपं जनरहितम् अभवत् । तत् किम् ?
४. फिजि द्वीपसमूहे कति द्वीपानि सन्ति ?
५. फिलिप्पैन्स् द्वीपसमूहे कति द्वीपानि सन्ति ?

(उत्तराणि ६५तमे पृष्ठे)

# अम्बा

काशीराज्यस्य राजा होत्रवाहनः। तस्य तिस्रः कन्यकाः- अम्बा अम्बिका अम्बालिका चेति। यदा कुमार्यः प्राप्तवयस्काः जाताः तदा राजा तासां स्वयंवरम् उद्घोषितवान्।

स्वकीयस्य अनुजस्य विचित्रवीर्यस्य विवाहं कर्तुम् इच्छन् भीष्मः स्वयंवरे सर्वान् राजकुमारान् पराजितवान्। तिस्रः अपि राजकुमारीः बलात्कारेण हस्तिनापुरं नीतवान्।

अम्बा-'अहं साल्वं परिणेष्यामि' इति उक्तवती। तदनुसारं भीष्मः तां साल्वसमीपं प्रेषितवान्। किन्तु भीष्मेण बलात्कारेण नीताम् अम्बां परिणेतुं साल्वः निराकृतवान्।

अम्बा चिन्तया प्रत्यागत्य 'मां परिणयतु' इति भीष्मं प्रार्थितवती। भीष्मः तत् निराकृतवान्। गुरुणा परशुरामेण आज्ञप्तः चेदपि भीष्मः अम्बां न परिणीतवान्। ब्रह्मचारिव्रतं न परित्यक्तवान्।

एतेन कुपिता अम्बा प्रतीकारं साधयितुम् इच्छन्ती शिवं ध्यायन्ती घोरं तपः आचरितवती। 'आगामिजन्मनि भवत्याः इष्टं सिध्यति' इति वरं दत्तवान् शिवः।

एतेन वरप्रसादेन अम्बा द्रुपदराजस्य कुमारीभूय बाल्यात् एव राजोचिताः विद्याः सम्पादितवती। भारतयुद्धतः पूर्वं यक्षस्य अनुग्रहेण पुरुषलक्षणं प्राप्य शिखण्डी जाता।

कुरुक्षेत्रयुद्धे अर्जुनः यदा भीष्मं सम्मुखीकृतवान् तदा अर्जुनस्य रथस्य उपरि शिखण्डी आसीत्। 'स्त्रियः उपरि बाणप्रयोगः अनुचितः' इति चिन्तयन् भीष्मः शस्त्रसंन्यासं कृतवान्। सुसमयं प्रतीक्षमाणः अर्जुनः भीष्मस्य उपरि बाणवर्षणं कृतवान्। भीष्मः भूमौ पतितवान्। एवम् अम्बा प्रतीकारं साधितवती।





# समस्यापरिहारः

पूर्वं कस्मिंश्चित् ग्रामे गिरिबालः नाम युवकः आसीत्। तस्य पिता वृद्धः। अनारोग्येण पीडितः पिता वर्षद्वयानन्तरं दिवङ्गतः। पितुः चिकित्सार्थं गिरिबालः बहुत्र ऋणं कृतवान् आसीत्। 'ऋणभारः परिहृतः चेत् अहं निश्चिन्तः' इति चिन्तयन् गिरिबालः स्वकीयां भूसम्पत्तिं विक्रीतवान्। ऋणं च प्रत्यर्पितवान्। सः इदानीं रिक्तहस्तः। अतः सः उद्योगान्वेषणं कुर्वन् नगरं प्रति प्रस्थितवान्।

ग्रामात् किञ्चिद्दूरे मार्गपार्श्वे वृक्षस्य अधः कश्चन वृद्धः उपविष्टः आसीत्। सः गिरिबालं दृष्ट्वा- "पुत्र! नगरं गच्छन् अस्ति किल भवान्? अहम् अपि नगरं प्रति एव प्रस्थितः। वार्धक्यकारणात् तावद्दूरं गन्तुं न शक्नोमि। अतः भाटकयानस्य प्रतीक्षायाम् अस्मि। यदि भवान् अपि मया सह आगच्छेत् तर्हि उपकाराय भवेत्। यतः अहं हृद्रोगी अस्मि। कृपया उपकरोतु" इति उक्तवान्।

गिरिबालः अपि निरन्तरगमनेन श्रान्तः आसीत्। पादयोः महती वेदना अनुभूयते स्म। अतः शकटप्रयाणस्य श्रवणेन तस्यापि उत्साहः आगतः।

तस्य मौनं दृष्ट्वा वृद्धः उक्तवान्- "अन्यथा मा चिन्तयतु। शकटस्य भाटकं पूर्णम् अहं दास्यामि। अहं तु हृद्रोगी भीरुः च। अतः एव साहाय्यं प्रार्थितवान्। भवान् मम विषये किं चिन्तयन् अस्ति इति न जानामि" इति।

"उपचारवचनानि किमर्थम्? भवता सह आगमनेन मम हानिः तु नास्ति किल?" इति वदन् गिरिबालः तत्रैव स्थितवान्। अल्पे एव काले तेन मार्गेण एकं शकटम् आगतम्। वृद्धः शाकटिकेन सह भाटकादिविषये वार्तालापं कृत्वा गिरिबालम् उक्तवान्- "भोः! एतां



वान्- "भो भोः ! वृद्धः अहं हृद्रोगेण पीडितः अस्मि। वैद्यदर्शनार्थम् अत्र आगतः। त्वरया गन्तव्यम्। अनावश्यकम् एवं शकटं न स्थगयन्तु। ज्येष्ठाः न क्लेशनीयाः" इति।

"वयं क्षणमात्रेण भवतां वस्तूनि परिशीलयिष्यामः। तदनन्तरं भवन्तः निश्चिन्ततया गन्तुम् अर्हन्ति" इति उक्त्वा रक्षकभटाः पेटिकां कीलितां दृष्ट्वा 'कुञ्चिकां ददातु' इति वृद्धं पृष्टवन्तः।

तदा झटिति वृद्धः उक्तवान्- "एषा पेटिका न मम, अपि तु एतस्य तरुणस्य" इति। एतत् श्रुत्वा गिरिबालः दिग्भ्रान्तः। तदा वृद्धः कोपं प्रदर्शयन्- "किं भोः ! तीक्ष्णदृष्ट्या पश्यति ? कुञ्चिकां ददातु तावत्" इति।

"अहं किं जानामि कुञ्चिकायाः विषये ?" इति आश्चर्येण पृष्टवान् गिरिबालः।

"भवतः पेटिकायाः कुञ्चिका भवतः समीपे न भवति वा ? किं वदति भवान् ?" इति कोपेन पृष्टवान् सः वृद्धः।

तदा शाकटिकः मध्ये गिरिबालम् उक्तवान्- "भोः ! शीघ्रं कुञ्चिकां ददातु। अन्यथा पेटिकया सह भवान् शकटात् अवतरतु। विवादश्रवणार्थं मम समयः नास्ति" इति।

किङ्कर्तव्यतामूढः गिरिबालः इतस्ततः पश्यन् आसीत्। तदा "सुदीर्घं प्रतीक्षां कर्तुम् अस्माकम् अपि समयः नास्ति" इति

पेटिकां कृपया शकटे स्थापयति वा ? भारः न उन्नेतव्यः इति वैद्येन सूचितः अस्मि" इति।

तत्समये शाकटिकः समीपे एव हरिततृणानि दृष्ट्वा तानि आनेतुं गतवान् आसीत्।

यदा शाकटिकः प्रत्यागतः तदा गिरिबालः पेटिकां शकटे स्थापितवान्। हस्तसाहाय्येन वृद्धं शकटे उपवेशितवान्, स्वयम् उपविष्टवान् च।

यदा शकटेन नगरं प्राप्तं तदा रात्रिः आरब्धा आसीत्। किञ्चिद्दूरं मुख्यमार्गे गमनानन्तरं रक्षकभटाः शकटम् अवरुध्य पृष्टवन्तः- "कुतः आगतवन्तः भवन्तः ? शकटं परिशोधनीयम् अस्ति" इति।

तत् वचनं श्रुत्वा वृद्धः सम्भ्रान्त्या उक्त-

उक्त्वा रक्षकभटाः शिलायाः साहाय्येन तालं भञ्जितवन्तः एव। पेटिकायाः अन्तः कश्चन स्यूतः दृष्टः। तस्य अन्तः अमूल्यानि सुवर्णाभरणानि आसन्।

रक्षकभटाः गिरिबालस्य शिखां गृहीत्वा- "किं भोः! महाचोर! पुरातनवस्त्राणां अधः चौर्यप्राप्तं धनं स्थापयित्वा अस्मान् वञ्चयितुं प्रयत्नं करोति वा? सुरपुरस्य भूस्वामिनः गृहे भवान् एव किल चौर्यं कृतवान्?" इति रौद्राकाराः सन्तः पृष्टवन्तः।

गिरिबालः कम्पमानस्वरेण उक्तवान्- "अहं न चोरः। एषा पेटिका न मम, अपि तु एतस्य वृद्धस्य एव। अहं मार्गे गच्छन् आसम्। साहाय्यार्थम् एषः माम् आहूतवान्। एषा वस्तुस्थितिः। चौर्यविषये अहं किमपि न जानामि" इति।

तदा वृद्धः कोपेन गर्जितवान्- "कीदृशम् असत्यं वदति एषः! रे! माम् एव चोरं वदति वा? भवान् मम वयोमर्यादां दृष्ट्वा वा सम्यक् व्यवहरतु। ज्येष्ठाः गौरवार्हाः खलु?" इति।

तदा रक्षकभटाः उक्तवन्तः- "भवत्सु कः सत्यं वदति, कः वा असत्यं वदति इति वयं न जानीमः। आरक्षकस्थानकं प्रति गमनम् एव अत्र शरणम्। रक्षकप्रमुखः सर्वं निर्णेष्यति" इति। तान् त्रीन् अपि आरक्षकस्थानकं नीतवन्तः च।



भटप्रमुखः शाकटिकं जानाति। अतः सः तम् एकान्ते आहूय प्रवृत्तं सर्वं पृष्टवान्, तं प्रेषितवान् च। अनन्तरं वृद्धं गिरिबालं च आहूय तयोः अभिप्रायं पृष्टवान्। उभौ अपि 'सा पेटिका मम न' इत्येव उक्तवन्तः।

"एतौ अद्य रात्रौ कारागारे स्थापयन्तु" इति भटान् आदिष्टवान् भटप्रमुखः। अनन्तरं सः वृद्धं गिरिबालं च दृष्ट्वा- "भवतोः अन्यतरः महाचोरः। सः कः इति श्वः प्रातःकाले निर्णीतः भविष्यति" इति उक्त्वा आसनात् उत्थाय स्वगृहं गतवान्।

गृहं गतस्य तस्य 'एषा समस्या कथं परिहरणीया' इत्येव चिन्ता। भोजनसमये अपि यदा सः चिन्तामग्नः एव दृष्टः तदा



तस्य पत्नी पृष्टवती- "का समस्या ?" इति।

भटप्रमुखः प्रवृत्तं निवेद्य उक्तवान्- "बहोः कालतः अस्मिन् उद्योगे अस्मि। किन्तु अद्यावधि एतादृशी समस्या मया न सम्मुखीकृता" इति।

तस्य पत्नी किञ्चित्कालम् आलोच्य "अहं चिन्तयामि- एतस्याः समस्यायाः परिहारे न तथा क्लेशः भवेत् इति। एतदर्थं भवान् एवं करोतु" इति परिहारमार्गं सूचितवती।

अनन्तरदिने भटप्रमुखः कार्यालयं गत्वा प्रथमं गिरिबालम् आहूय- "मम भटाः अन्यथा चिन्तयित्वा भवन्तम् अत्र आनीतवन्तः। भूस्वामिनः गृहे यः चौर्यं कृतवान् सः अद्य बद्धः अस्ति। चोरितानि वस्तूनि अपि लब्धानि। अतः भवान् गन्तुम् अर्हति" इति उक्त्वा पेटिकाम् आनीय दातुं सेवकान् आदिष्टवान्। सेवकैः आनीतां पेटिकां दृष्ट्वा भीतिं प्रकटयन्- "एषा पेटिका न मम। रिक्तहस्तः अहम् उद्योगान्वेषणार्थं नगरं प्रति प्रस्थितः। वस्तुतः एषा पेटिका वृद्धस्य एव। अतः मम मास्तु" इति उक्तवान् गिरिबालः।

"निरपराधित्वे सिद्धे अपि पेटिकास्वीकारे किमर्थं भीतिः ? एषा भवतः एव इत्यत्र शाकटिकः अपि साक्षी। अतः भवान् एतां पेटिकां नयतु। वृथा समययापनं मास्तु" इति असमाधानं प्रकटयन् उक्तवान् भटप्रमुखः।

"प्रथमम् इतः गच्छामि। अनन्तरं वृद्धस्य हस्ते पेटिकाम् अर्पयामि। आरक्षकैः सह विवादः किमर्थम् ?" इति चिन्तयित्वा गिरिबालः पेटिकां स्वीकृत्य बहिः आगतवान्।

गिरिबालस्य गमनानन्तरं भटप्रमुखः वृद्धम् आहूय उक्तवान्- "निर्दोषिणं भवन्तं वृथा पीडितवान्। क्षाम्यतु भवान्। भवान्, भवता सह स्थितः तरुणः वा चोरः न इति अद्य प्रातः ज्ञातम्। पेटिकां तरुणस्य हस्ते दत्त्वा प्रेषितवान् अस्मि। भवान् अपि इतः गन्तुम् अर्हति" इति।

'गिरिबालः पेटिकां नीतवान्' इति ज्ञात्वा वृद्धः खिन्नः। 'कथञ्चित् सः अन्वेष्टव्यः' इति चिन्तयित्वा वृद्धः त्वरया ततः गतवान्।

समीपे एव कस्यचित् गृहस्य पुरतः उपविष्टः आसीत् गिरिबालः। वृद्धः धावन् तस्य समीपं गत्वा पेटिकां स्वीकृत्य "अये ! दशसहस्ररूप्यकात्मकानि आभरणानि विनायासं प्राप्तानि इति चिन्तितवान् वा?" इति तिरस्कारभावनया पृष्टवान्।

"अये महाशय ! दूरतः एव नमस्करोमि। भवतः सम्पर्कः मम मास्तु एव। कृपया स्वीकरोतु भवतः पेटिकाम्। भवतः निरीक्षायाम् अत्र उपविष्टः आसम्। 'अत्रत्यानि आभरणानि मदीयानि न' इति भवान् किमर्थम् उक्तवान् इति अहं तु न जानामि। अस्तु तावत्, अहं मम मार्गम् अनुसरामि। कुत्रापि उद्योगं प्राप्य निरातङ्कं जीविष्यामि" इति वदन् गन्तुम् उद्युक्तः गिरिबालः।

तदा भटप्रमुखः तत्र आगत्य- "अये वृद्ध ! पेटिकायाम् आभरणानि न सन्ति। पुरातनवस्त्राणि शिलाखण्डाः च तत्र सन्ति" इति वदन् वृद्धं तत्रैव स्थातुम् आदिष्टवान्। "एषः एव चोरः। पेटिकायां यानि आभरणानि आसन् तानि भूस्वामिनः गृहे चोरितानि एव। एतं बद्ध्वा कारागारे स्थापयन्तु" इति सः भटान् आज्ञापितवान्।

गिरिबालः तृप्त्या निःश्वसन्- "हन्त ! चोरः लब्धः। उज्जीवितः अहम्। मम निर्दोषित्वम् इदानीं प्रमाणितम् अभवत् किल?" इति भटप्रमुखम् उक्तवान्।

भटप्रमुखः गिरिबालस्य समीपम् आगत्य प्रीत्या तस्य स्कन्धे हस्तं स्थापयित्वा "भवतः निर्दोषित्वं केवलं न, प्रामाणिकता अपि प्रमाणिता अभवत्। भवते मम कार्यालये एव उद्योगावकाशं कल्पयामि। तदर्थं भवान् सिद्धः वा?" इति पृष्टवान्।

"उद्योगान्वेषणार्थं प्रस्थितस्य मम न कस्मिंश्चित् उद्योगे पक्षपातः। भवतः कार्यालये कार्यं कर्तुम् अहं सिद्धः। भवतः कृपार्थं कृतज्ञः अस्मि" इति सविनयम् उक्तवान् गिरिबालः।





# मन्त्रिपरीक्षा

पूर्वं विद्याधरः नाम महाराजः श्रीपुरं पालयति स्म। तस्य मन्त्री सुदर्शनः। श्रीपुरं न तथा विशालं राज्यम्।

श्रीपुरराज्यस्य पार्श्वे विशालानि विपुलसैन्यसहितानि च अन्यराज्यानि आसन्। तथापि सुदर्शनस्य कुशाग्रबुद्धेः, राजनीति-नैपुण्यस्य च कारणतः कोऽपि अन्यराजः श्रीपुरं वशीकर्तुं समर्थः न आसीत्।

कालवशात् सुदर्शनः वार्धक्यं प्राप्तवान्। तदा तदा सः व्याधिपीडितः अपि भवति स्म। राजवैद्याः- "इतःपरं मन्त्रिपदवीतः विश्रान्तिः एव वरम्" इति सूचितवन्तः। 'एतावत्पर्यन्तम् एतेन श्रद्धया कार्यं कृतम्। वार्धक्ये एतस्य विश्रान्त्यर्थं व्यवस्था मम कर्तव्यम्' इति राजा अपि चिन्तितवान्।

अतः एकदा सः सुदर्शनम् आहूय- "वार्धक्यादिकारणतः भवान् मन्त्रिपदवीतः विश्रान्तिं यत् इच्छति तत् मम अपि अनुमतम् एव। भवान् यावत् निवृत्तः न भवति ततः पूर्वम् एव तत्स्थानार्थं योग्यस्य चयनम् उचितम् इति मम मतिः" इति उक्तवान्।

मन्त्री सुदर्शनः महाराजस्य प्रस्तावम् अङ्गीकृतवान्। 'मन्त्रिस्थानार्थं समर्थस्य चयनं कुर्मः' इति वार्तां सडिण्डिमघोषं प्रसारितवान् च।

एतेन बहवः विद्यावन्तः युवकाः राजधानीम् आगत्य सुदर्शनं दृष्टवन्तः। सुदर्शनः तेषां कृते विविधाः परीक्षाः आयोजितवान्। तासु त्रयः समानान् अङ्कान् प्राप्तवन्तः। एतेषु त्रिषु एकः मन्त्रिपदव्यां योजनीयः। तदर्थं विशेषपरीक्षा आयोजनीया च।

प्रारम्भिकपरीक्षासु विजयं प्राप्तवतां नाम क्रमशः-श्रीधरः विनयः चन्द्रकान्तः इति। सुदर्शनः एतान् त्रीन् महाराजस्य पुरतः

आनीतवान्। सभायां त्रयाणां परिचयम् उक्त्वा कृशकायं मार्जारम् एकैकस्मै एकैकं दत्त्वा- "मासत्रयं यावत् एतान् भवन्तः पोषयन्तु। एतदर्थं धनागारतः भवन्तु एकैकः अपि सहस्रसुवर्णनाणकान् स्वीकरोतु। मासत्रयानन्तरं पोषितेन मार्जारेण सह अत्र आगच्छन्तु" इति उक्तवान्।



मन्त्रिणः वचनानुसारं मासत्रयानन्तरं ते त्रयः आत्मना पालितेन मार्जारेण सह आगतवन्तः। एकैकस्य मार्जारः एकैकविधः आसीत्।

विनयस्य मार्जारः अतीव बलवान् आसीत्। सभासदाः 'एषः मार्जारः वा, व्याघ्रशिशुः वा' इति सन्दिग्धाः अभवन्। श्रीधरस्य मार्जारः पुष्टः सन् सुन्दरतया दृश्यते स्म। चन्द्रकान्तस्य मार्जारः तु अतीव कृशः। दर्शकेषु करुणाभावम् उत्पदयन् सः चलितुम् अपि कष्टम् अनुभयति स्म।

सुदर्शनः त्रीन् अपि मार्जारपोषणरीतिं निवेदयितुम् उक्तवान्।

प्रथमं विनयः उक्तवान्- "भवता दत्तेन धनेन अहं मार्जारार्थं क्षीरं, नवनीतं, मांसं, भक्ष्यभोज्यादिकं च व्यवस्थापितवान्। अवशिष्टानि पञ्चशतं सुवर्णनाणकानि अत्र आनीतवान् अपि" इति।

अनन्तरं श्रीधरः उक्तवान्- "मार्जारः विशेषतया मूषकभक्षकः इत्यतः अहम् एतं मार्जारं मम मित्रस्य गृहे स्थापितवान्, यत्र मूषकाः विषेशतया सन्ति। किन्तु 'कदाचित् मार्जारः आहारं न प्राप्नुयात्' इति आशङ्कया प्रतिदिनं क्षीरार्थम् अपि व्यवस्थां कृतवान्। व्ययात् अवशिष्टानि नवशतं सुवर्णनाणकानि इदानीं आनीतवान् अस्मि" इति।

अन्ते चन्द्रकान्तः उक्तवान्- "मार्जाराय मया विशेषाहारस्य व्यवस्था न कृता एव। यथाशक्ति आहारं सम्पादयन् सः मम गृहे एव आसीत्। विशेषमहत्त्वरहितस्य मार्जारस्य निमित्तं प्रजानां धनस्य व्ययः अनुचितः एव इति मम अभिप्रायः। अतः सहस्रं सुवर्णनाणकानि अपि प्रत्यानीतवान् अस्मि। एतेन धनेन किमपि प्रजाहितकार्यं कर्तुं शक्यते

किल इति अहं चिन्तितवान्'' इति।

सभायां स्थिताः सर्वे 'चन्द्रकान्तः एव मन्त्री भवेत्, यतः सः प्रजाहितं विशेषतया चिन्तयति' इति भावितवन्तः। किन्तु मन्त्री सुदर्शनः ''श्रीधरः एव श्रीपुरस्य मन्त्री भवितुम् अर्हः'' इति उक्तवान्।

एतत् श्रुत्वा महाराजः विद्याधरः प्रजाः च आश्चर्यचकिताः अभवन्। तदा मन्त्री सुदर्शनः स्वाभिप्रायं प्रकटीकृतवान्– ''भोः, भवन्तः त्रिभिः अपि केन क्रमेण मार्जाराः पोषिताः इति ज्ञातवन्तः एव। विनयस्य व्यवहारज्ञानं नास्ति। मासत्रयाभ्यन्तरे मार्जारपोषणार्थं पञ्चशतं रूप्यकाणि सः व्ययीकृतवान्। मार्जारः यावत् अपि पोषितः भवेत् नाम, किन्तु तस्य उपयोगः मूषकग्रहणे एव, न तु इतरत्र। अतः एतावतः धनस्य व्ययः सर्वथा अनुचितः एव।

चन्द्रकान्तः तु महाकृपणः, विवेकशून्यः च। प्राणिदया अपि नास्ति तस्य। कर्तव्यप्रज्ञा अपि शून्या एव। एतादृशः कथं वा मन्त्री भवितुम् अर्हति? मार्जारः यदा मरणावस्थाम् आपन्नः तदा वा आहारः दातव्यः आसीत्। कृशतायाः कारणम् आहाराभावः एव किल? तथापि एषः तूष्णीं स्थितवान्।

अस्यां परीक्षायां उत्तीर्णः श्रीधरः एव। मार्जारस्य आहारः मूषकः। अतः सः मार्जारं मित्रगृहे स्थापितवान्, यत्र च मूषकाः बहुसङ्ख्यया निवसन्ति। एतेन मार्जारस्य उदरम् अपि पूरितं भवति, मित्रगृहे मूषकपीडा अपि न्यूना भविष्यति। एतावदेव न। दूरदर्शी एषः पोषणाभावशङ्कया दिने एकवारं क्षीरस्य व्यवस्थाम् अपि कृतवान् एव। एवं च मन्त्रिणः ये गुणाः दूरदर्शिता, कार्याकार्यविवेकः, चातुर्यम् इत्यादयः, ते श्रीधरे सन्ति। अतः एव एतं मन्त्रिस्थानार्थं योग्यं चिन्तितवान्'' इति।

एतेन विवरणेन सभाजनाः सर्वे सन्तोषातिरेकेण करताडनं कृतवन्तः। महाराजः अपि सन्तुष्टः अभवत्।






# १९

[चन्द्रवर्माणं दृष्ट्वा भटा: 'एष: मान्त्रिक:' इति चिन्तितवन्त:। चन्द्रवर्मा वृद्धत: कांस्यदुर्गं प्रति गन्तुं साहाय्यकं चित्रपटं प्राप्तवान्। अनन्तरं स: भटै: सह रुद्रपुरं गतवान्। पुरजना: चन्द्रवर्माणं दृष्ट्वा "महामान्त्रिक: जयतात्" इति जयघोषं कुर्वन्त: वैभवपूर्वकं स्वागतीकृतवन्त:। तदनन्तरम्......]

चन्द्रवर्मा आत्मनि धैर्यं पूरयन् गम्भीरतया हस्तचालनेन जनानां सवैभवं स्वागतं स्वीकुर्वन् तोरणादिभि: विशेषतया अलङ्कृतं मुख्यद्वारं प्राप्तवान्।

तत्र शिवसिंहमहाराज:, मन्त्रिण:, नगरप्रमुखा: च "महामान्त्रिक! स्वागतं भवत:! महामान्त्रिक: जयतात्" इति वदन्त: पूर्णकुम्भेन राजमर्यादोचितं स्वागतं कृतवन्त:।

यदा चन्द्रवर्मा अश्वत: अवतीर्ण: तदा राजा शिवसिंह: समीपम् आगत्य मन्दहासं प्रदर्शयन् प्रीत्या चन्द्रवर्मण: भुजस्य उपरि हस्तं संस्थाप्य उक्तवान्- "चन्द्रवर्मन्! एतादृशे अल्पेवयसि भवान् यत् मन्त्रविद्यापाण्डित्यं प्राप्तवान् तत् असदृशम् एव। भवत्सदृशम् अल्पवयस्कं महामान्त्रिकम् अहम् इत:पूर्वं न दृष्टवान् एव। मम राज्यस्य सीमायां स्थित्वा मायाशक्त्या सर्वान् जनान् पीडयत: शङ्खमान्त्रिकं भवान् यत् नाशितवान् तेन वयं सर्वे



सन्तुष्टाः कृतज्ञाः च'' इति।

शिवसिंहस्य वचनं श्रुत्वा आश्चर्यम् अनुभूतवान् चन्द्रवर्मा। 'शङ्खमान्त्रिकस्य मरण-वार्ता कथम् एतावच्छीघ्रम् एतेन प्राप्ता? मद्विषये एषः सर्वं ज्ञातवान् स्यात् वा? एवं तर्हि मम अग्रिमयोजना विपर्यस्ता भवेत् वा?' इत्यादि-संशयाः उत्पन्नाः तस्य मनसि। तथापि हृद्गतं भावं बहिः न प्रकटयन्- ''भवतां सदभिप्रायार्थं कृतज्ञः अस्मि। सः शङ्खमान्त्रिकः महादुष्टः आसीत्। परपीडनार्थं स्वविद्यायाः उपयोगं करोति स्म! अतः एव तं यमपुरीं प्रेषितवान्। यावदपि सामर्थ्यं भवतु नाम, परपीडनं पापाय एव। पापस्य फलं निश्चितम् अपि'' इति उक्तवान्।

''इदानीं मान्त्रिकपर्वते निवसतः कालकेतोः द्वारा मया भवतः विषये सर्वं ज्ञातम्। भवतः शक्तिसामर्थ्यस्य परिचयः स्थूलतया प्राप्तः। 'कांस्यदुर्गगमनार्थं भवान् प्रार्थनीयः' इति सूचितवान् कालकेतुः। अतः भटानां द्वारा अहं भवन्तम् अत्र आनायितवान्। एतत्कार्यं कर्तुं भवत्सदृशः कः अन्यः लभ्येत?'' इति पृष्टवान् शिवसिंहमहाराजः।

''कांस्यदुर्गगमनम्! तत् न तथा महत्-कार्यम्'' इति उदासीनभावनया इव उक्तवान् चन्द्रवर्मा। अत्रान्तरे मन्त्री महराजस्य कर्णे किमपि सूचितवान्। तदा महाराजः चन्द्रवर्माणं राजप्रासादस्य अन्तः नयन् 'चन्द्रवर्मन्! भवान् दीर्घप्रयाणेन श्रान्तः स्यात्। अतः प्रथमं भोजनादिकं प्रचलतु। तदनन्तरं किञ्चित् विश्रान्तिसुखम् अनुभवतु। अनन्तरं सावधानतया वार्तालापं करिष्यामः'' इति उक्त्वा तस्य व्यवस्थार्थं सेवकान् आदिष्टवान्।

चन्द्रवर्मणः वसत्यर्थं राजप्रासादे विशेष-व्यवस्था उपकल्पिता आसीत्। स्नानानन्तर सेवकाः षड्रसोपेतं भोजनं परिवेषितवन्तः। अनन्तरं तल्पस्य उपरि मृदुशय्यायां किञ्चित् निद्रां कर्तुं प्रयत्नं कृतवान् चन्द्रवर्मा। किन्तु निद्रा समीपम् अपि न आगता। कापालिका क्षणकालं स्मरणे आगता। ''मद्विषये कालकेतुः शिवसिंहमहाराजं किमपि उक्तवान्। किमर्थं

स: एवं कृतवान् ? कांस्यदुर्गगमनार्थम् लाभाय भवतु इति एवं कृतवान् स्यात् वा ?"

बहुचिन्तनानन्तरं चन्द्रवर्मणा कालकेतोः तात्पर्यं ज्ञातम् इव- 'मम स्वराज्यप्राप्त्यर्थं यथेष्टं धनम् आवश्यकम्। धनेन एव किल सैन्यं सज्जीकर्तुं शक्यते ? एतत्कार्यार्थं कांस्यदुर्गे स्थितः धनराशिः उपयोगाय भवेत्। कालकेतुः मया यत् उपकृतः तत्प्रत्युपकाररूपेण सः एवं कृतवान्। एवं तर्हि शिवसिंहः कीदृशः ?'

एवं चन्द्रवर्मा सुप्तः एव सुदीर्घं चिन्तयन् आसीत्। तदा कश्चन सेवकः तत्र आगत्य 'प्रधानमन्त्री महाराजस्य समालोचनामन्दिरे भवतः प्रतीक्षां करोति' इति सूचितवान्। चन्द्रवर्मा झटिति उत्थाय मुखप्रक्षालनादिकं कृत्वा योग्यं वेषं धृत्वा समालोचनामन्दिरं गतवान्।



महाराजः तं गौरवपूर्वकं स्वागतीकृत्य उचिते आसने उपवेशितवान्। अनन्तरं प्रमुखविषयस्य प्रस्तावं कृत्वा उक्तवान्- 'चन्द्रवर्मन् ! कांस्यदुर्गे यः धनराशिः अस्ति तदर्थम् अहं न लोलुपः। एतम् अंशम् अहं प्रथमम् एव स्पष्टीकर्तुम् इच्छामि" इति।

चन्द्रवर्मा मौनेन शिरः चालितवान्। शिवसिंहः कथनम् अनुवर्तयन् उक्तवान्- "एवं तर्हि कांस्यदुर्गविषये मम किमर्थं तावती आसक्तिः इति प्रश्नः उद्भूतः स्यात् भवतः मनसि। तदर्थं मया उच्यमानम् उत्तरम् अपि विचित्रम् इव भासेत। किन्तु मया यत् उच्यते तत् सत्यम् एव। एतत् दुर्गं पश्चिमदिशि समुद्रतीरे अस्तीति भवान् स्मरति किल ?" इति।

"आम्। पश्चिमसमुद्रतीरे अस्ति इति जानामि एव। सहस्रशः वर्षेभ्यः एतत् कांस्यदुर्गं कोऽपि न दृष्टवान्। यः दर्शनार्थं गतवान् सोऽपि सजीवं न प्रत्यागतवान् इत्यपि अहं जानामि" इति उक्तवान् चन्द्रवर्मा।

एतत् श्रुत्वा मन्त्री आश्चर्येण महाराजस्य मुखं दृष्टवान्। महाराजः तु शिरः चालयन्- "भवदुक्तं सत्यं स्यात्। कांस्यदुर्गस्य एकां भित्तिं समुद्रस्य तरङ्गाः सर्वदा क्षालयन्ति इति

भवान् श्रुतवान् स्यात् किल ?" इति पृष्टवान् ।

"तथा मया अपि श्रुतम्" इति उक्तवान् चन्द्रवर्मा ।

"भित्तिपार्श्वे यः समुद्रः अस्ति तत्र मान्त्रिकेण केनचित् बन्धने स्थापिताः केचन अपूर्वप्राणिनः सन्ति - इति अस्माकं पूर्वजानां विश्वासः । तेषां विषये स्पष्टकल्पनां प्राप्तुं मम पिता बहुधा प्रयत्नं कृतवान् । किन्तु तेन किमपि प्रयोजनं न प्राप्तम् । इच्छामात्रेण मानवरूपं महाकालनागरूपं च धर्तुं समर्थेन भवतः स्नेहितेन कालकेतुना एतत् कर्तुं शक्येत । किन्तु तत्र भवतः साहाय्यं मार्गदर्शनं च अत्यावश्यकम् । तदा एव अहं तेषां प्राणिनां कांस्यावरणं प्राप्तुं शक्नुयाम् । एषः एव मम स्वार्थः" इति उक्तवान् शिवसिंहः ।

शिवसिंहस्य वचनेषु चन्द्रवर्मणः विश्वासः न उत्पन्नः । अत्र कापि कपटता स्यात् एव इति निश्चितवान् सः । 'विरल-लभ्यानां प्राणिनां कांस्यमयं शरीरावयवं प्राप्तुं कोऽपि एतावन्तं श्रमम् आचरति वा ? वस्तुतः शिवसिंहः कांस्यदुर्गस्य अन्तः स्थितं धनराशिम् एव इच्छति । तत् प्राप्तुं आत्मनः शक्तिः नास्ति । अतः मयि मन्त्रशक्तिः अस्ति इति भ्रान्त्या मम साहाय्यं मार्गान्तरेण पृच्छति । कांस्यदुर्गे वस्तुतः यदि धनं प्राप्येत तर्हि अहम् अपि प्रतिवञ्चनया एतं वञ्चयित्वा उपायेन कार्यं साधयिष्यामि । शठं प्रति शाठ्यम् एव योग्यम् आचरणम् ।"



"महाराज ! एतादृशकष्टसाध्यानां कार्याणां साधने अस्मादृशानां मान्त्रिकानां विशेषवृत्तिः। अस्माकं कर्तृत्वशक्तेः प्रदर्शनार्थं अवकाशः अत्र एव लभ्यते। अतः मम तु कांस्यदुर्गगमने विशेषाभिरुचिः। मया सह कांश्चन साहाय्यकान् प्रेषयतु। तेषु देवलः नाम युवकः अवश्यं भवेत्" इति उक्त्वा चन्द्रवर्मा स्वहस्तं पुनः परिशील्य- "आम्, देवलः एव मया सह आगच्छेत्" इति उक्तवान्।

शिवसिंहः महामन्त्री च परस्परं मुखं दृष्टवन्तौ। क्षणकालानन्तरं राजा चन्द्रवर्माणं पृष्टवान्- "एतस्य देवलस्य वृद्धः पिता अरण्ये सञ्चरन् अस्ति इति भवान् जानाति वा ? तं कदाचित् दृष्टवान् वा भवान् ?" इति।

"कः सः वृद्धः" इति पृच्छन् चन्द्रवर्मा करतलं सम्यक् परिशीलितवान्। "अहो ! एषः वा ? आम्, एषः वृद्धः अरण्ये सञ्चरन् एव अस्ति। एतत्प्रकरणे एतस्य अपि मुख्यं पात्रम्। अतः एतस्य वासार्थं सकलव्यवस्था उपकल्पनीया। यदि सः नगरम् आगन्तुम् इच्छति तर्हि तदर्थम् अपि व्यवस्थाकल्पनं उचितं भवेत्। मदीये अस्मिन् कांस्यदुर्गगमने देवलस्य, तत्पितुः एतस्य वृद्धस्य च महत्त्वपूर्णं पात्रत्वम्' इति उक्तवान् च।

चन्द्रवर्मणः वचनानन्तरं तत्र किञ्चित्कालं मौनं व्याप्तम् आसीत्। महाराजः मौनं निवारयन् उक्तवान्- "तथैव अस्तु, भवतः वचनं पालयिष्यामः। देवलं भवान् भवता





सह नयतु। भवतः रक्षणार्थं सेनाम् अपि प्रेषयामः। सहस्रं सज्जाः सैनिकाः प्रेषिताः चेत् पर्याप्ताः किल ?" इति।

तदा चन्द्रवर्मा उच्चैः हसन् उक्तवान्- "अहं कुत्रापि युद्धार्थं न गच्छन् अस्मि महाराज ! यदि युद्धं करणीयम् आपतितं चेदपि मायाशक्तेः उपयोगेन शत्रून् निवारयिष्यामि। वस्तुतः दुष्टशक्तिभिः किल मम युद्धं भवेत् ? तत्र मन्त्रबलं विना सेना किं वा कुर्यात् ? अतः भवत्पक्षतैः पर्याप्तमात्रेण आहारपदार्थान्, तेषां वहनार्थं कांश्चन गर्दभान् च अहम् इच्छामि। एतान् गर्दभान् सुव्यवस्थितं चालयितुं दश जनाः प्रेषिताः चेत् पर्याप्ताः। ते सैनिकाः एव भवेयुः इत्यपि न नियमः। सङ्ख्या अधिका भवति चेत् क्लेशः अपि अधिकः" इति।

"तथा किमपि मास्तु। विश्वासार्हान् धैर्यसाहसशीलान् पञ्चषान् भवतः साहाय्यकत्वेन प्रेषयामि। पञ्चाशत् सैनिकाः अपि भवन्तम् अनुसरन्ति। राज्यसीमानन्तरं पश्चिमखातस्य प्रवेशतः पूर्वं तत्प्रान्तस्य मण्डलाधीशः बीरमल्लः भवता सूचितानि कार्याणि निर्वर्तयिष्यति। तस्मै अहम् एकं पत्रं लिखित्वा अपि दास्यामि। तत् भवतः विशेषप्रयोजनाय भवेत्" इति उक्तवान् शिवसिंहः।

बीरमल्लनामश्रवणेन चन्द्रवर्मा स्वसेनानायकं धीरमल्लं तत्क्षणे स्मृतवान्। धीरमल्लस्य का गतिः स्यात् ? सुबाहोः च का वार्ता ? इति चिन्तयन् चन्द्रवर्मा व्यथया दीर्घम् एकवारं निःश्वसितवान्।

"महाराज ! भवतः वचनस्य विरुद्धं किमपि न वदामि। भवान् यथा इच्छति तथा करोतु। श्वः प्रातः एव मया प्रयाणस्य आरम्भः करणीयः। कांस्यदुर्गप्राप्तितः पूर्वं महारण्यानि पर्वताः मरुभूमयः च अतिक्रमणीयाः भवन्ति। ये प्राणिनः आहारपदार्थान् वहन्ति ते तत्तत्परिसरानुकूलाः भवन्ति चेत् वरम्। मरुभूमौ प्रयाणार्थं उष्ट्राः आवश्यकाः भवेयुः। एतदर्थं भवतः सीमाप्रान्तेस्थितं मण्डलाधीशं बीरमल्लं स्पष्टं सूचयतु। तावता

अहं नितराम् उपकृतः भवेयम्'' इति उक्तवान् चन्द्रवर्मा।

''एतत्सर्वम् अहं सुव्यवस्थितं कारयिष्यामि। एतानि कार्याणि न मम सामर्थ्यात् बहिर्भूतानि। अतः एतादृशव्यवस्थाविषये भवता चिन्तनीयम् एव नास्ति'' इति उक्तवान् शिवसिंहः।

अनन्तरदिने प्रातःकाले चन्द्रवर्मा कांस्यदुर्गं प्रति प्रस्थितः। शिवपुरस्य सीमापर्यन्तं राजा, मन्त्री, पुरप्रमुखाः च आगत्य चन्द्रवर्मणः शुभप्रयाणम् आशंसितवन्तः। चन्द्रवर्मणः अनुचरेषु देवलः प्रमुखः आसीत्। चन्द्रवर्मणः वचनानुसारं राजा तं बन्धविमुक्तं कृतवान् आसीत्। तेन सह चन्द्रवर्मा रहसि वार्तालापं कृतवान् आसीत् अपि।

शिवपुरतः प्रस्थितः चन्द्रवर्मा अरण्यमार्गेण बहुदूरं प्रयाणं कृतवान्। वृद्धेन यः चित्रपटः दत्तः आसीत् सः न तथा उपयोगय जातम्। यतः घोरे अरण्ये दिशः कल्पनां प्राप्तुम् एव कष्टम् आसीत्। परितः पर्वताः प्रपाताः च। कुत्रापि योग्यः मार्गः नास्ति। यत्र ते गच्छन्ति सः एव मार्गः! सूर्योदयं सूर्यास्तं च आधारीकृत्य ते मार्गनिश्चयं कुर्वन्ति स्म।

केषाञ्चित् दिनानां प्रयाणानन्तरं एकदा प्रातःकाले देवलः काञ्चित् विशालां शिलाम् आरुह्य परितः पश्यन् हस्ततालेन इतरान् आह्वयन् उच्चैः उक्तवान्- ''भोः! समीपे एव



शिथिला काचित् प्राचीननगरी दृश्यते। तदेव कांस्यदुर्गं स्यात् अपि'' इति।

तस्य वचनं श्रुतवतां सर्वेषां शरीरे नूतनशक्तिसञ्चारः अभवत्। चन्द्रवर्मा इतरभटाः च धावन्तः गत्वा तां शिलाम् आरुह्य देवलेन सूचितायां दिशि दृष्टिं प्रसारितवन्तः। अनतिदूरे पर्वतस्य पादभागे शिथिलावस्थायां स्थितम् एकं महानगरं ते दृष्टवन्तः। नगरे भित्तयः इतस्ततः पतिताः दृश्यन्ते स्म। गृहस्य छदयः पतनार्थं सिद्धाः। तत्रतत्र नगरमध्ये वृक्षाः अपि उत्पन्नाः आसन्। अतः नगरस्य सौन्दर्यम् इदानीं नास्ति। गतवैभवं प्रकटयन्तः अवशेषाः केवलं दृश्यन्ते स्म।

''एतत् कांस्यदुर्गं तु सर्वथा न। तथापि

वयं तत्र गत्वा परिशीलयाम'' इति उक्त्वा चन्द्रवर्मा शिलातः अवतीर्य नगरस्य दिशि प्रस्थितवान्।

यदा ते नगरं प्रविष्टवन्तः तदा एकस्य पुरातन-गृहस्य पुरतः क्रीडायां निरताः त्रयः व्याघ्रशिशवः तैः दृष्टाः। चन्द्रवर्माणं तत्सहचरान् च दृष्ट्वा ते व्याघ्रशिशवः गर्जनं कुर्वन्तः झटिति उत्प्लुत्य गुल्मेषु प्रविष्टवन्तः। अपर-क्षणे तस्मात् गुल्मतः प्रौढस्य व्याघ्रस्य गर्जनं श्रुतम्।

तत् गर्जनं स्थगयन् चन्द्रवर्मा- ''एतस्य समीपम् गमनं न क्षेमकरम्। वयं निःशब्दम् अन्यमार्गेण गच्छाम'' इति उक्त्वा अन्यं मार्गम् अनुसृतवान्।

सुविशाले तस्मिन् नगरे मानवमात्रस्य वसतिचिह्नम् अपि न दृश्यते स्म। सर्वाणि गृहाणि पतनावस्थायाम् आसन्।

चन्द्रवर्मा यदा नगरस्य मध्यभागं प्राप्तवान् तदा तेन तत्र किञ्चन शिलाफलकं दृष्टम्। शिलाफलके किमपि लिखितम् आसीत्। किन्तु तत् इदानीम् अस्पष्टं दृश्यते। चन्द्रवर्मा शिलाफलकं चिरकालं परिशील्य तत्र लिखितस्य विषयस्य तात्पर्यं ज्ञातवान्। शासनरूपेण स्थितेन तेन शिलाफलकेन चन्द्रवर्मा ज्ञातवान् यत्- एतत् करवीरपुरम्। सहस्रशः वर्षाणि एतत् नगरं सकलसम्पत्समृद्ध्या विलसति स्म। किन्तु उत्तरदिकतः आगतैः बर्बरजातीयैः दुराक्रमणपूर्वकम् अत्रत्या सम्पत्तिः लुण्ठिता। अत्र प्राप्तां धनराशिं ते स्वराजधानीं कांस्यदुर्गं नीतवन्तः इति।

शिलाफलकं पठित्वा चन्द्रवर्मा सहचरान्-उक्तवान्- ''अत्र इतःपरं कालहरणेन किमपि प्रयोजनं नास्ति। वृक्षैः वन्यप्राणिभिः च आक्रान्ते अस्मिन् नगरे किं वा लभ्येत? अत्रत्यं तु कांस्यदुर्गं न। अतः वयं शीघ्रम् गच्छाम'' इति।

सर्वे ततः पश्चिमदिशम् अनुसृत्य अग्रे गतवन्तः। (अनुवर्तते)






# निदर्शनम्

'कथाकोविदम् एतं वेतालं पुनः केन उपायेन पराजयेयम् ?' इति चिन्तयन् इव त्रिविक्रमः पुनः अपि वृक्षस्य समीपं गतवान्। शाखायां लम्बमानं शवं वृक्षतः अवतार्य स्कन्धे आरोप्य मौनं श्मशानाभिमुखं प्रस्थितवान् च। तदा शवान्तर्गतः वेतालः वक्तुम् आरब्धवान्- "अये ! महाराज ! भवन्तम् अस्मिन् कठिने परिश्रमे यः योजितवान् सः प्रायः कश्चन योगिवर्यः वा भक्ताग्रेसरः वा स्यात् इति अहं चिन्तयामि। यतः एतादृशाः यं कमपि स्वबुद्धि-कौशलेन इष्टे मार्गे योजयितुं समर्थाः। एतादृशेन केनचित् गुरुवर्येण तीव्रं परीक्षितस्य पूर्णचन्द्रनामकस्य कथां श्रावयामि। रुचि-पूर्णायाः एतस्याः कथायाः श्रवणेन भवतः मार्गायासः अपि परिहृतः भवेत्" इति।

अनन्तरं वेतालेन कथा आरब्धा-

रामचन्द्रपुरे पूर्णचन्द्रः नाम कश्चन परम-

## वेतालकथा



नास्तिकः आसीत्। कदाचित् कश्चन योगिपुङ्गवः एतं ग्रामम् आगतवान्। परमदैवभक्तः सः दैवभक्तेः प्रयोजनविषये सर्वान् बोधयति स्म।

एकदा पूर्णचन्द्रः योगिवर्यस्य उपन्यासानन्तरं एकान्ते तं दृष्ट्वा पृष्टवान्- ''श्रीमन्! भवान् दैवभक्तिविषयं सर्वान् उपदिशति। एवं तर्हि देवविषये भवतः दृढः विश्वासः अस्ति वा? भगवतः अस्तित्वं भवान् निदर्शनेन निरूपयितुं शक्नोति वा?'' इति।

''भवन्तं परितः यः प्रपञ्चः अस्ति सः किम् अस्मदादिभिः निर्मातुं शक्यते? अतः भगवतः अस्तित्वे एषः प्रपञ्चः एव निदर्शनम्' इति उक्तवान् योगी।

''देवः यदि न स्यात् तर्हि नदी किं न प्रवहेत्? वायुः किं न सञ्चरेत्? किं कोऽपि अस्मिन् लोके न जीवेत्? अहम् एतत् न विश्वसिमि। नदीपर्वतादयः स्वभावतः एव अत्र सन्ति इति अहं वदामि। अतः तेषाम् उत्पत्त्यर्थं देवस्य आवश्यकता नास्ति। अतः अन्यत् किमपि प्रमाणम् अस्ति चेत् वदतु'' इति उक्तवान् पूर्णचन्द्रः।

''पश्यतु वत्स! भगवतः अस्तित्वं विश्वासेन केवलं प्रमाणीक्रियते'' इति उक्तवान् योगी।

''मम देवे विश्वासः नास्ति। एवं तर्हि देवः नास्ति इति अर्थः वा?'' इति पुनः पृष्टवान् पूर्णचन्द्रः।

''वत्स! अग्निः हस्तं दहति। अन्नं बुभुक्षां निवारयति। औषधं रोगं निवारयति। अत्र सर्वत्र वयं तत्तस्य शक्तिं प्रत्यक्षतः ज्ञातुं शक्नुमः। किन्तु देवस्य स्थितिम् एवं सुलभतया प्रत्यक्षीकर्तुं न शक्नुमः। तर्कस्य इन्द्रियानुभवस्य च काचित् सीमा अस्ति। भवान् तु भगवतः अस्तित्वे निदर्शनं पृच्छति। निदर्शनं प्रदर्शितं चेदेव भवतः तृप्तिः। अस्तु तावत्, कदाचित् भवान् निर्मलेन मनसा भगवन्तं किमपि प्रार्थयतु। मनःशुद्धिः अस्ति चेत् प्रार्थना पूर्णा भवति एव। तदा एव भवान् भगवतः अस्तित्वम् अङ्गीकरिष्यति''



इति उक्तवान् योगी ।

"मम तु तादृशः अभिलाषः कोऽपि नास्ति । अतः अहं भगवन्तं न प्रार्थयामि। यदि स्यात् चेदपि अन्यस्य पुरतः दीनतां न प्रदर्शयामि, सः देवः वा कुतः न भवेत् ? यत् आवश्यकं तत् स्वप्रयत्नेन साधयिष्यामि" इति हठेन उक्तवान् पूर्णचन्द्रः ।

"किम् अधिकचर्चया। एकवर्षानन्तरम् अहम् पुनः अत्र आगमिष्यामि। ततः पूर्वं भवान् मया यथा उक्तं तथा देवं प्रार्थयिष्यति। इष्टसिद्धिं प्राप्स्यति च" इति उक्तवान् योगिवर्यः ।

पूर्णचन्द्रः अग्रे पुनः चर्चां न कृतवान् । "चर्चया किं प्रयोजनम् ? मम प्रश्नस्य उत्तरं वक्तुं योगिनः सामर्थ्यं नास्ति" इति चिन्तयित्वा सः गृहं प्रत्यागतवान् । अनन्तरम् अल्पे एव काले योगिवर्यः तस्मात् ग्रामतः गतवान् । पूर्णचन्द्रः एतत् प्रकरणं क्रमशः विस्मृतवान् । एवं स्थिते कदाचित् ग्रामस्य धनिकः अस्वस्थः अभवत् । केनापि औषधेन तस्य रोगः न दूरङ्गतः । धनिकस्य पुत्राः ज्योतिषिकम् आहूय रोगस्य कारणं निवारणोपायं च पृष्टवन्तः ।

"एषः रोगः औषधेन न शाम्यति । कश्चित् नास्तिकः देवालयम् आगत्य निष्कपटभावेन भगवन्तं प्रार्थयति चेत् सः भगवान् एतस्य व्याधिं दूरीकरिष्यति" इति ज्योतिषिकः उक्तवान् ।

अतः धनिकस्य पुत्राः बान्धवाः च पूर्णचन्द्रस्य गृहं गत्वा प्रार्थितवन्तः- "भवतः देवलयगमने श्रद्धा न स्यात् । तथापि धनिकनिमित्तं भवान् आगच्छतु । धनिकस्य रोगनिवारणार्थं देवं प्रार्थयतु" इति ।

एतत् श्रुतवतः पूर्णचन्द्रस्य एव आश्चर्यम् । 'अहं देवालयं न गच्छामि' इति जानन् देवः आत्मनः अस्तित्वनिरूपणार्थम् एवं कृतवान् स्यात् वा ? अथवा अत्र योगिनः तन्त्रं किमपि स्यात् वा ?

धनिकः अतीव सज्जनः । 'वस्तुस्थितिः यत्किमपि भवतु नाम। प्रार्थनया मम का

हानिः ? मम प्रार्थनया तेषां इष्टं सिध्यति चेत् सिध्यतु नाम' इति चिन्तयित्वा पूर्णचन्द्रः देवालयं गतवान् ।

भगवतः विग्रहं श्रद्धया दृष्ट्वा- "भगवन् ! भवतः अस्तित्वं यदि वास्तविकं स्यात्, भवतः अनुग्रहस्य रोगदूरीकरणशक्तिः अस्ति इत्येतत् यदि सत्यं स्यात् तर्हि एतस्य धनिकस्य व्याधिः शान्तः भवतु" इति प्रार्थितवान् ।

अनन्तरदिनात् आरभ्य विशेषौषधेन इव क्रमशः रोगः न्यूनीभवन् अल्पे एव काले सर्वथा शान्तः अभवत् ।

'पूर्णचन्द्रस्य प्रार्थनया धनिकस्य रोगः शान्तः' इति वार्तां श्रुत्वा दूरदूरतः जनाः पूर्णचन्द्रस्य गृहम् आगतवन्तः । 'मम समस्यायाः निवारणार्थं भगवन्तं प्रार्थयतु' इति एकैकोऽपि पूर्णचन्द्रं निवेदितवान् । एतत्सर्वं श्रुतवतः पूर्णचन्द्रस्य बुद्धिः निष्क्रिया इव जाता । प्रपञ्चे कियत्यः समस्याः ! तथापि सः निर्मलमनस्कतया मन्दिरं गत्वा सर्वेषां निमित्तं भगवन्तं प्रार्थितवान् । पूर्णचन्द्रस्य सर्वाः प्रार्थनाः सफलाः जाताः । एतेन, प्रार्थनया यत् सिध्यति तत् काकतालीयं न इति विश्वासः उत्पन्नः ।

एतादृशप्रसङ्गैः पूर्णचन्द्रः अल्पे एव काले कीर्तिं सम्पादितवान् । एवं स्थिते कदाचित् पूर्णचन्द्रस्य पत्नी पतिम् उक्तवती- "भगवतः प्रार्थनया भवान् बहूनां समस्याः सुलभतया परिहरति । एवम् अपूर्वशक्तिशाली भवान् मम



एकाम इच्छां किमर्थं न पूरयेत् ?" इति ।

"का सा भवत्याः इच्छा ?" इति पृष्टवान् पूर्णचन्द्रः । "भवान् एतद्देशस्य राजा भवेत् । अहं च महाराज्ञी भवेयम् इत्येव मम इच्छा" इति उक्तवती सा ।

'एवं प्रार्थना अनुचिता' इति प्रथमं चिन्तितवान् पूर्णचन्द्रः । किन्तु अनन्तरं- "देवस्य अस्तित्वम् एतेन प्रसङ्गेन प्रमाणितं भवेत् । यदि मम पत्न्याः वचनं पूर्णं भवेत् तर्हि एव देवः अस्ति इति अङ्गीकुर्याम्" इति निश्चितवान् सः ।

अतः सः देवालयं गत्वा- 'इतः सप्तदिनाभ्यान्तरे अहं राजा यथा भवेयम् तथा भवेत् । यदि अहं राजा भवेयं तर्हि समीचीनतया प्रजापालनं कृत्वा सर्वाः समस्याः परिहरिष्यामि" इति भगवन्तं प्रार्थितवान् ।

'मम प्रार्थना निश्चयेन सफला भविष्यति' इति पूर्णचन्द्रस्य निश्चयः । किन्तु एकमासानन्तरम् अपि तस्य प्रार्थना न फलिता । सः निराशः अभवत् ।

"भवता यत् प्रार्थितं तत् महत् जातम् इति मन्ये । अतः प्रार्थना विफला जाता । एवं तर्हि 'विपुला सम्पत्तिः प्राप्यताम्' इति प्रार्थनां करोतु । तत् वा सिध्यतु" इति उक्तवती पत्नी ।

पूर्णचन्द्रः तथैव प्रार्थितवान् । किन्तु एतया प्रार्थनया अपि किमपि फलं न सिद्धम् ।

तदा पत्नी पुनः उक्तवती- "देवः ऐश्वर्यं



न ददाति चेत् का अस्माकं हानिः? भवान् प्रार्थनया सर्वेषां समस्याः निवारयति किल? ये भवता उपकृताः तेषां समीपतः प्रतिफलरूपेण धनादिकं स्वीकरोतु। तेन अस्माकं सम्पत्तिः क्रमशः वर्धते'' इति।

पूर्णचन्द्रः पत्नी यथा सूचितवती तथैव व्यवहरम् आरब्धवान्। तद्दिनतः परार्थे प्रार्थनेन यत् फलं लभ्यते स्म तदपि अप्राप्यम् अभवत्।

वेतालः एवं कथां समाप्य अवदत्- "राजन्! देवप्रार्थनया पूर्णचन्द्रः यानि सत्फलानि प्राप्तवान् तानि किं काकतालीयानि एव वा? यतः यदा सः आत्मनः राज्यप्राप्तिं प्रार्थितवान् तत् न सिद्धम् एव किल? अनन्तरकाले कृतानि सर्वाणि प्रार्थनानि विफलानि जातानि। एवं तर्हि किं देवः नास्तीति अङ्गीकरणीयं वा अस्माभिः? अथवा योगी पूर्णचन्द्रं कुमार्गे प्रेरितवान् इति वदाम वा? एतस्य सन्देहस्य उत्तरं जानन् अपि यदि न वदति तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति।

तदा त्रिविक्रमः उक्तवान्- "पूर्वं पूर्णचन्द्रस्य प्रार्थनानि यानि फलितानि तानि न काकतालीयानि। देवस्य महिम्ना एव तानि सिद्धानि। किन्तु तस्य अपि काचित् सीमा अस्ति किल? यदा स्वार्थबुद्ध्या पूर्णचन्द्रः प्रार्थनाम् आरब्धवान् तदा आरभ्य तानि न सिद्धानि। यावत्पर्यन्तं निःस्वार्थता मनसि तिष्ठति तावत्पर्यन्तं प्रार्थितानि प्राप्तानि। यदा च मनः स्वार्थभावनया कलुषितम् अभवत् तदा प्रार्थितं न प्राप्तम्। देवस्य महिम्ना एव प्रार्थितानि सिद्धानि इत्यतः देवस्य अस्तित्वं प्रमाणितम् अभवत्। अतः योगी पूर्णचन्द्रं कुमार्गे न प्रेरितवान् ,न वा बुद्धिभेदम् उत्पादितवान्'' इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवसहितः वेतालः अदृश्यः भूत्वा वृक्षस्य शाखाम् अवलम्बितवान्।






# चतुरः भीमराजः

लिपिकारस्य भीमराजस्य नामश्रवणेन अग्रहारे स्थिताः सर्वे भीताः भवन्ति इव। महाधनिकाः उच्चोद्योगे स्थिताः अपि भीमराजतः भीताः। यतः भीमराजः केनापि उपायेन तान् स्ववशे स्थापयति स्म।

एकदा प्रसिद्धः ज्योतिषिकः तं ग्रामम् आगतवान्। ग्रामे स्थितानां प्रमुखानां गृहं गत्वा जातकफलम् उक्त्वा विविधपारितोषिकं प्राप्तवान्। यथेष्टं धनं सम्पादितवान् अपि। अन्ते सः लिपिकारस्य भीमराजस्य गृहम् अपि आगतवान्।

"आगच्छतु आगच्छतु" इति अधिकार-दर्पेण वदन् लेखनीं पार्श्वे संस्थाप्य भीमराजः ज्योतिषिकं स्वागतीकृतवान्। कुशलप्रश्ना-नन्तरं ज्योतिषिकः आगमनकारणं निवेदित-वान्। भीमराजस्य हस्तं स्वहस्ते स्वीकृत्य बहुकालं हस्तरेखाः परिशील्य उक्तवान् ज्योतिषिकः- "अहो भाग्यं भवतः! राजयोगं सूचयति भवतः हस्तरेखा। सार्वभौमपदवीम् अलङ्कर्तुम् अर्हस्य हस्तः भवतः। अतः एव भवान् किरीटं विना अपि सार्वभौमः इव पूज्यते" इति।

अनन्तरं ज्योतिषिकः फलाफलम् समग्रम् उक्तवान्। अन्ते भीमराजः पृष्टवान्- "हस्त-रेखाफलकथनार्थं कियत् दातव्यं भवते?" इति।

"तत्र किम्? सन्तुष्टाः स्वशक्त्यनुगुणं यच्छन्ति। निर्धनाः अपि चतुर्भ्यः रूप्यकेभ्यः न्यूनं न दत्तवन्तः। भवान् तु धर्मराजस्य अपरावतारः इव। ग्रामस्य अनुद्घोषितः महाप्रभुः। एतादृशं भवन्तम्- "एतावद् ददातु" इति वदामि वा? भवतः इच्छानुगुणं यत् ददाति तदेव प्रसादः इति भावयामि" इति कृतकविनयेन उक्तवान् ज्योतिषिकः।

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"

"भवान् ग्रामस्थान् धनिकं श्रीनिवासार्यं ग्रामप्रमुखं देवेशं, कायस्थं, राजदूतं विनयप्रसादम्, च दृष्टवान् वा ?" इति पुनः पृष्टवान् भीमरजः।

"आम्। अत्र आगमनतः पूर्वं तान् सर्वान् दृष्ट्वा एव आगतवान्। यतः तेषां गृहाणि मार्गे इतः पूर्वम् एव मया प्राप्तानि" इति उक्तवान् ज्योतिषिकः।

अत्र आगमनेन भवता विशेषलाभः सम्पादितः अपि स्यात्" इति उक्तवान् भीमराजः।

"सत्यं, वस्तुतः अस्मिन् अग्रहारे ये निवसन्ति ते सर्वे लक्ष्मीपुत्राः एव। दानगुणशीलाः अपि। सामान्यतः सार्धैकमासतः अत्र एव सञ्चरामि किल ? सर्वे मम विषये आदरं प्रदर्शितवन्तः। अहं अत्रत्यं विद्याविषयकम् आदरं दृष्ट्वा आश्चर्यचकितः अस्मि" इति उक्तवान् ज्योतिषिकः।

"भवता यत् धनं प्राप्तं तेन मम अपि तृप्तिः। वस्तुतः भवता कियत् सम्पादितम् ?" इति पृष्टवान् भीमराजः।

"असत्यकथनेन भवन्तं किमर्थं वञ्चयामि ? सामान्यतः द्विशतं रूप्यकाणि सम्पादितानि" इति ज्योतिषिकः उक्तवान्।

"ओह् एवं वा ? अहम् अपि तथैव तर्कितवान् आसम्। वस्तुस्थितिं ज्ञातुम् एव एवम् उपायम् आश्रितवान्। एवं तर्हि भवान् यावत् सम्पादितवान् तत्र पञ्चप्रतिशतं कररूपेण ददातु। भवता दशरूप्यकाणि दातव्यानि भवन्ति किल ? तत्र जातकफलं यदुक्तं तदर्थं पञ्चरूप्यकाणि स्वीकरोतु। अवशिष्टानि पञ्चरूप्यकाणि भवता एव दातव्यानि। तदा आवयोः व्यवहारः समाप्तः भविष्यति" इति उक्तवान् ज्योतिषिकः।

एतेन आघातेन ज्योतिषिकः दिग्भ्रान्तः। 'इतोऽपि अत्रैव तिष्ठामि चेत् नूतनाः विपत्तयः आपतेयुः' इति चिन्तयित्वा सः भीत्या पञ्चरूप्यकाणि कररूपेण दत्वा प्राप्तिपत्रम् अपि अस्वीकृत्य ततः मौनं निर्गतवान्।





अस्माकं देवालयाः-

# कोणार्कमन्दिरम्

चन्द्रभागानदिः यत्र समुद्रेण मिलति तत्र एव सुप्रसिद्धः सूर्यदेवालयः अस्ति। श्रीकृष्णस्य पुत्रः साम्बः तेजोमूर्ति भगवन्तं सूर्यनारायणं ध्यायन् बहुकालपर्यन्तम् अत्र आसीत् इति पुराणेभ्यः ज्ञायते।

त्रयोदशे शतके कालिङ्गराजः नरसिहदेवः कदाचित् एतं प्रदेशं दृष्टवान्। दर्शनसमनन्तरम् एव 'अत्र सूर्यदेवालयः निर्मातव्य'' इति सङ्कल्पं कृतवान्। एतदर्थं राज्ये स्थितान् द्वादशसहस्रशिल्पिनः आहूतवान्।





प्रसिद्धशिलपिनः वास्तुशास्त्रज्ञस्य विष्णुमोहराणस्य निर्देशने कार्यम् आरब्धम्। सुदूर- प्रान्तेभ्यः अपेक्षिताः उत्कृष्टाः शिलाः आनीताः। 'शिल्पक्षेत्रे एव अद्वितीयस्य एतस्य मन्दिरस्य निर्माणं युक्ते काले समाप्येत' इति उद्देशेन शिलूपिनः अहोरात्रं कार्यं कुर्वन्तः आसन्।



भगवतः सूर्यस्य रथस्य आकारेण आसीत् देवालयः। रथस्य इव अस्यापि चक्राणि, अश्वाः च सन्ति। आवर्षं सूर्यकिरणाः एतस्य उपरि यथा पतेयुः तथा ईशान्याभिमुखतया मन्दिरं निर्मीयमाणम् आसीत्।

शिल्पिनः मोहराणस्य पुत्रः धर्मपादः। सः चतुर्दशवर्षीयः। सः मातुः समीपे वर्धमानः पित्रा सङ्गृहीतान् ताडपत्र-ग्रन्थान् श्रद्धया परिशीलयति स्म। एकदा सः पितरं द्रष्टुम् इच्छन् मातुः अनुमतिं सम्पाद्य कोणार्कं प्रति प्रस्थितवान्।





धर्मपादः पादाभ्याम् एव सञ्चरन् कोणार्कं प्राप्तवान्। अकस्मात् आगतं पुत्रं दृष्ट्वा अत्यानन्दितः पिता प्रीत्या आलिङ्गितवान्। शिल्पकलायाः पराकाष्ठा इव स्थितं मन्दिरं दृष्ट्वा धर्मपालः आनन्दम् आश्चर्यं च युगपत् अनुभूतवान्।

मन्दिरनिर्माणं समाप्तप्रायं, तथापि कस्यापि मुखे सन्तोषः न नृत्यति। सर्वेषां मुखे विषादस्य रेखा! धर्मपादः शिल्पिनः विषादकारणं पृष्टवान्। यावता प्रयत्नेन अपि मन्दिरशिखरं स्वस्थाने न तिष्ठति। 'निर्माणे एव दोषः वा, योजने अज्ञानं वा इति न ज्ञायते' इति उक्तवन्तः शिल्पिनः।





मन्दिरनिर्माणसमाप्तौ विलम्बं दृष्ट्वा महाराजः असमाधानं प्रकटितवान्। 'श्व- सूर्योदयतः पूर्वं यदि मन्दिर-शिखरकार्यं समाप्तं न स्यात् तर्हि सर्वान् शिल्पिनः शूलम् आरोप-यिष्यामि" इति कठोरम् आज्ञापितवान् सः। धर्मपादः मन्दिरशिखरस्थलं गतवान्। सर्वं सम्यक् परिशील्य 'अग्रे किं करणीयम्' इति मार्गं सूचित-वान्।

धर्मपालस्य साहसं विशेषज्ञानं च दृष्ट्वा सर्वे आश्चर्यचकिताः। पितुः सन्तोषस्य तु सीमा एव नास्ति। किन्तु केचन असूयापराः शिल्पिनः- "द्वादशसहस्र-शिल्पिभिः कर्तुम् असाध्यं कार्यं कश्चित् बालकः करोति इत्येतत् अपमानास्पदम्" इति अपस्वरम् उत्थापितवन्तः। एतत् श्रुत्वा धर्मपादः अतीव खिन्नः।





यदि अहम् एतस्मात् लोकतः एव निर्गच्छेयं तर्हि एतत् कार्यं मया कृतम् इति कोऽपि न जानाति। तेन च शिल्पिनाम् अपमाननम् अपि दूरं गच्छति" इति चिन्तयित्वा धर्मपादः मध्यरात्रे मन्दिरशिखरं प्राप्तवान्। 'तत् पूर्णिमादिनम्' इत्यतः समुद्रस्य नद्याः च जलं मन्दिरप्राङ्गणं प्राप्नोति स्म। धर्मपादः शिखराग्रतः समुद्रे उत्पतितवान्। स्वप्राणान् अर्पितवान् च।

युगानन्तरम् अपि धर्मपादस्य साहसम् इतिहासे चिरस्थायिरूपेण अस्ति। तस्य च मन्दिरस्य शिखरम् इदानीं नास्ति, तथापि मुखशालायाः भित्तौ सूर्यस्य यानि सुन्दरशिल्पानि चित्रितानि सन्ति तानि सन्दर्शकान् सन्तोषयन्ति।






कोणार्कदेवालयस्य मुखशालायाः भित्तौ यानि शिल्पानि सन्ति तानि जगत्-प्रसिद्धानि। इदानीं चन्द्रभागानदी समुद्रः च देवालयतः दूरङ्गतौ, तथापि देवालयपरिसरस्य गाम्भीर्यं न विनष्टम्।



# ललाटलिखितम्

कस्मिंश्चित् ग्रामे अपराजितः नाम कृषिकः आसीत्। सः स्वपुत्र्याः विवाहव्ययार्थं भूमिं समग्रं विक्रीय दशसहस्ररूप्यकाणि आनीय गृहे सुरक्षितरूपेण स्थापितवान्। तत्समये तस्य दूरबन्धुः कश्चन तत्र एव आसीत्। किञ्चित्कालानन्तरम् अपराजितः कार्यनिमित्तं बहिः गतवान्। तदा सः दूरबन्धुः तत् धनम् अपहृत्य पलायितवान्।

एतस्य दूरबन्धोः नाम शिवेशः। शिवेशस्य विवाहयोग्या एका पुत्री आसीत्। वरपक्षीयाः यावत् वरदक्षिणां पृच्छन्ति तावत् दातुम् असमर्थः सः चिन्ताकूपे पतितः आसीत्। इदानीं विना श्रमेण यत् धनं प्राप्तं तेन सः अतीव सन्तुष्टः अभवत्। अपराजितस्य गृहतः आनीतं धनं स्वगृहस्य अट्टे प्राचीनवस्तूनां मध्ये गोप्यतया स्थापितवान्। वरपितरं सोमशेखरं द्रष्टुं त्वरया प्रस्थितवान् च।

यदा शिवेशः अट्टे धनं स्थापयन् आसीत् तदा तदीयः पुत्रः रुद्रेशः एतत् दृष्टवान्।

शिवेशस्य निर्गमनानन्तरं रुद्रेशः विना शब्दम् अट्टम् आरूढवान्। तत्रत्यं धनस्यूतं स्वीकृत्य वस्त्रे गोप्यतया स्थापितवान्। ग्रामे तस्य समानशीलाः पञ्चषाः स्नेहिताः आसन्। तेषाम् अन्वेषणं कर्तुं रुद्रेशः गृहतः प्रस्थितवान्।

बालकः धनप्राप्त्या अतीव सन्तुष्टः आसीत् किल? सः मार्गे गच्छन् सन्तोषातिरेकेण नृत्यं करोति स्म। तथा गमनसमये धनस्यूतः मार्गे कुत्रापि पतितः। रुद्रेशः एतं विषयं न ज्ञातवान् एव।

किञ्चित्कालानन्तरं याने वस्तूनि आरोप्य तेन मार्गेण तद्ग्रामीणः धनिकः तत्र आगतवान्। मार्गे पतितं धनस्यूतं दृष्टवान् च।

सः यानात् अवतीर्य धनस्यूतं स्वीकृत्य



पुनः यानम् आरूढवान्। 'कोऽपि पश्येत्' इति भीत्या सः धनस्यूतं न उद्घाटितवान् एव।

सः स्वकीयम् आपणं प्राप्य 'वस्तूनि अन्तः स्थापयतु' इति सेवकम् आदिष्टवान्। कार्यपरिशीलने व्यग्रः सः तदा तं धनस्यूतं विस्मृतवान्। किन्तु किञ्चित्कालानन्तरं स्यूतः स्मरणे आगतः। स्वयं गत्वा वस्तूनां मध्ये स्यूतस्य अन्वेषणं कृतवान्। किन्तु स्यूतः तेन तत्र न प्राप्तः।

वस्तुतः सर्वाणि वस्तूनि अन्तः स्थापयन् सेवकः तं स्यूतं दृष्टवान् आसीत्। सः स्यूतं झटिति कोषे स्थापयित्वा त्वरया कार्यं समापितवान्। अनन्तरं गृहं गत्वा द्वारं पिधाय धनस्यूतम् उद्घाटितवान्। सेवकस्य पत्नी तावत् धनम् अकस्मात् दृष्ट्वा दिग्भ्रान्ता।

"एतावत् धनम् अस्माकं समीपे अस्ति इति कोऽपि यदि जानीयात् तर्हि प्राणापायः एव भवेत्। अतः वाटिकायां गर्ते एतं धनस्यूतं स्थापयाम। तदुपरि यथापूर्वं मृत्तिकां स्थापयाम च" इति उक्तवती सा।

सेवकः एतत् अङ्गीकृतवान्। रात्रौ तौ गृहस्य पृष्ठतः भूमौ धनं निक्षिप्तवन्तौ। तदा पार्श्वगृहस्थः शेषगिरिः तत् दृष्टवान्। यदा सेवकः तस्य पत्नी च स्वगृहं प्रविष्टवन्तौ, तदा शेषगिरिः मन्दं वृतिम् अतिक्रम्य तयोः वाटिकां प्रविष्टवान्। हस्तसाहाय्येन मृत्तिकां निष्कास्य गर्ते स्थितं घटं बहिः आनीतवान्। अन्तः स्थितं धनस्यूतं स्वीकृत्य घटं पुनरपि गर्ते स्थापितवान्। यथापूर्वं मृत्तिकां तदुपरि स्थापयित्वा वृतिम् अतिक्रम्य स्वगृहं प्रति प्रस्थितवान् च।

तदानीं मध्यरात्रकालः। योगायोगेन तदानीम् एव कश्चन चोरः शेषगिरेः गृहसमीपम् आगतवान् आसीत्। सः शेषगिरेः व्यवहारं पूर्णतया दृष्टवान्। 'एषः शेषगिरिः अपि कश्चन चोरः। चौर्यात् यत् प्राप्तं तस्य अर्धभागः प्रष्टव्यः' इति चिन्तयित्वा सः शेषगिरेः समीपम् आगतवान्। शेषगिरिः चोरं दृष्ट्वा 'चोरः चोरः' इति आक्रोशनं करणीयम् इति यद्यपि चिन्तितवान् किन्तु स्वहस्ते स्थितं

धनं चौर्येण प्राप्तम् इति स्मरन् सः तथा न कृतवान्। धनस्यूतं तत्रैव पातयित्वा धावन् गृहं प्रविश्य द्वारपिधानं कृतवान्।

चोरः स्वकीयम् अदृष्टं स्मृत्वा सन्तोषम् अनुभवन् ततः पलायनं कृतवान्। किन्तु अहो दुरदृष्टम्! केचन शुनकाः भषन्तः तम् अनुसृतवन्तः। शुनकानां निरन्तरभषणेन सुप्ताः तत्परिसरनिवासिनः सर्वे जागरिताः अभवन्। तेषु केचन चोरम् अनुसृत्य धावितवन्तः। 'इदानीम् अहम् एतैः निश्चयेन बद्धः भवामि' इति चिन्तयन् चोरः धनस्यूतं मार्गपार्श्वे क्षिप्त्वा पलायितवान्।

तस्य ग्रामस्य पण्डितः रामेश्वरः प्रतिदिनं उषःकाले नदीं गत्वा स्नानं कृत्वा आगच्छति। तद्दिने अपि सः यथापूर्वं नद्यां स्नात्वा प्रत्यागच्छन् मार्गपार्श्वे पतितं धनस्यूतं दृष्टवान्। सः स्यूतम् उन्नीतवान्। अन्तः धनम् अस्ति इति ज्ञात्वा सः सन्तोषम् अनुभूतवान्। "अहो, भाग्यम्' इति उद्गारम् आत्मनि एव प्रकटयन् सः गृहं प्रत्यागतवान्।

गृहस्य पुरतः केचन उपविष्टाः आसन्। ते विवाहमुहूर्तस्य निश्चयार्थं तत्र आगताः आसन्। तान् दृष्ट्वा रामेश्वरः वस्त्रेण धन-स्यूतं गोपयन् गृहं प्रविष्टवान्। राङ्कवेण स्यूतं बद्ध्वा आन्दोलिकायाः उपरि स्थापयित्वा त्वरया सः बहिः आगतवान्।

तत्समये रामेश्वरस्य पत्नी द्रोण्यां वस्त्राणि स्थापयित्वा क्षालनार्थं नदीं प्रस्थिता आसीत्।



तदा सा आन्दोलिकायां स्थितं मलिनं राङ्कवं दृष्टवती। राङ्कवं द्रोण्यां स्थापयित्वा नदीं गतवती। राङ्कवेन सह स्थितं धनस्यूतं सा न लक्षितवती एव।

यदा रामेश्वरस्य पत्नी नदीं प्राप्तवती तदा एव अपराजितस्य पत्नी अपि तत्र आगतवती। वस्त्रक्षालनसमये रामेश्वरस्य पत्नी धनस्यूतं ज्ञातवती। सा तं स्यूतं कलशे स्थापयित्वा किमपि न प्रवृत्तम् इव वार्तालापं कृतवती।

वस्त्रक्षालनानन्तरं यदा रामेश्वरस्य पत्नी अपराजितस्य पत्नी च गृहं प्रति प्रस्थितवत्यौ तदा कश्चन प्रमादः संवृत्तः। तयोः कलशौ समानाकारौ। अतः अनवधानवशात् रामेश्वरस्य पत्न्याः कलशः अपराजितस्य पत्न्याः हस्ते आगतः।

गृहम् आगत्य अपराजितस्य पत्नी वस्त्रशोषणार्थम् उद्युक्ता। तदा तया कलशे विद्यमानः धनस्यूतः दृष्टः।

'एतत् अत्र कथम् आगतं स्यात्?' इति यावत् सा चिन्तयन्ती आसीत् अत्रान्तरे अपराजित तत्र आगतवान्। "किं भोः! ह्यः सायङ्काले पेटिकायां धनस्यूतं स्थापितवान् आसम्। इदानीं तत् धनं तत्र न दृश्यते। भवती किमपि....." इति यावत् सः वाक्यं न समापितवान् तावत् तस्याः हस्ते स्थितं धनस्यूतं दृष्टवान्। "अरे! रे! भवती किमर्थं एतत् स्पृष्टवती? एकघण्टातः अन्वेषणं कुर्वन् आसं किल!" इति उक्त्वा धनस्यूतं स्वीकृतवान् च।

आत्मनः कलशे धनस्यूतः कथम् आगतः इति अपराजितस्य पत्नी न ज्ञातवती एव। 'कदाचित् कार्यव्यग्रा अहम् एव दोषं कृतवती स्याम्' इति चिन्तयित्वा सा मौनं स्थितवती।

दिनद्वये अविचिन्तिताः बहु घटनाः प्रवृत्ताः। तत् कथम् अपि भवतु नाम, भाग्यवशात् अपराजितः स्वकीयं धनं प्राप्तवान्। अनन्तरं तस्य पुत्र्याः विवाहः निर्विघ्नतया परिसमाप्तः।






विष्णुमूर्तिः आदिशेषं दृष्ट्वा "भोः आदिशेष, एतेषां देवानां कृते भवान् मन्दरपर्वतं उत्पाटय समुद्रे संस्थाप्य आगच्छतु" इति आज्ञापितवान्। तदनुसारेण आदिशेषः मन्दरपर्वतं उत्पाटय नीत्वा क्षीरसमुद्रे स्थापितवान्।

क्षीरसमुद्रस्य मथनेन यत् अमृतम् उत्पद्यते, तस्य अमृतस्य एकः भागः समुद्राय अर्पणीयः इति देवैः अङ्गीकृतम् आसीत्।

किन्तु तावता समुद्रमथनसम्बन्धिनी समस्या न परिहृता। समुद्रे स्थापितः मन्दरपर्वतः तत्रैव निमग्नः अभवत्। तं पर्वतं यः कोऽपि उन्नीय गृह्णाति चेत्, तदा एव देवदानवाः समुद्रं मथितुं शक्नुवन्ति। तथा गृहीत्वा को वा मथनार्थम् उपकुर्यात्?

देवादयः पुनः विष्णुं प्रार्थितवन्तः। तदा विष्णुः दयया महाकूर्मस्य रूपं स्वीकृत्य स्वीयपृष्ठस्य उपरि मन्दरपर्वतं धर्तुम् अङ्गीकृतवान्।

एतात्पर्यन्तं सर्वं समीचीनं जातम्। इदानीं मथनार्थं रज्जुः अपेक्षिता किल? किं करणीयम्? तदा महासर्पः वासुकिः पुरतः समागत्य 'अहं मन्थानस्य रज्जुः भवामि' इति उक्तवान्। अनन्तरं देवाः दानवाः च क्षीरसमुद्रं मथितुम् आरब्धवन्तः।

तदा अपि एकः विवादः उत्पन्नः। यदा देवाः वासुकेः मस्तकभागं ग्रहीतुं प्रवृत्ताः, तदा दानवाः विरोधं प्रकटितवन्तः। "किम् अस्माभिः वासुकेः पुच्छं ग्रहीतव्यं वा? एवं

"१२. हालाहलप्राशनम्"



कदापि न शक्यते'' इति आग्रहं कुर्वन्तः ते दानवाः वासुकेः मस्तकभागम् एव गृहीतवन्तः। गत्यन्तराभावात् देवैः पुच्छम् एव गृहीतम् ।

एवंरीत्या यथाकथञ्चित् समुद्रस्य मथनकार्यम् आरब्धम्। देवाः दानवाः च सुदीर्घकालं यावत् श्रद्धया परिश्रमेण च क्षीरसमुद्रं मथितवन्तः। तदा अमृतस्य उत्पत्तेः पूर्वं हालाहलनामकं विषं समुद्रतः निर्गत्य अत्यन्त-वेगेन सर्वासु अपि दिक्षु व्याप्तम् अभवत् ।

तत् दृष्ट्वा सर्वे भयेन कम्पमानाः आक्रन्दनं कृतवन्तः। किंकर्तव्यतामूढाः ते सर्वे त्वरया कैलासपर्वतं गत्वा, तत्र पार्वती-सहितं शिवं दृष्ट्वा - ''भोः, देवाधिदेव! हालाहलविषेण लोकत्रयम् अपि दह्यमानम् अस्ति। इदानीं भवान् अस्मान् रक्षतु। सर्वेषां लोकानाम् अपि भवान् एव ईश्वरः। भवतः परमतेजोमयस्वरूपस्य आदिं वा अन्तं वा द्रष्टुं ब्रह्मविष्णुमहेन्द्रादिषु न कोऽपि समर्थः। अतः इदानीम् एतत् विषं परिहृत्य लोकः भवता एव रक्षणीयः'' इति प्रार्थित-वन्तः।

तेषां दुरवस्थां दृष्ट्वा कृपालुः शिवः पार्वतीं पश्यन् ''क्षीरसागरस्य मथनसन्दर्भे यत् भयङ्करं कालकूटविषम् उत्पन्नं, तेन प्रजानां कीदृशं कष्टम् आपतितं, पश्यतु। इदानीम् अहं एतत् विषं पिबामि चेत् कष्टस्य परिहारः भविष्यति'' इति उक्तवान्।

पार्वती अङ्गीकारं सूचितवती। तदा शिवः सर्वेषु लोकेषु व्याप्तं समस्तं विषं एकत्र संकल्य्य स्वीयमुखे स्थापितवान्। तत् विषं कण्ठतः उपरि दृढं गृहीतवान् च। विष-तापेन तस्य कण्ठः कृष्णवर्णीयः जातः। तेन शिवः नीलकण्ठः इति नामान्तरं प्राप्तवान्। सर्वेषां भयं परिहृतम्।

शिवस्य दयया कालकूटभयस्य निवारणा-नन्तरं देवदानवाः पुनः क्षीरसमुद्रं मथितुम् आरब्धवन्तः। तदा समुद्रतः कामधेनुः उपरि आगता। यज्ञकार्याणां सिद्ध्यर्थं मुनयः तां स्वीकृतवन्तः। अनन्तरं उच्चैश्रवाः इति एकः श्वेतः अश्वः समुद्रतः उत्पन्नः। तम्



अश्वं बलिः अपेक्षितवान्। इन्द्रः तु 'अहम् एव नयामि' इनि वक्तुं यदा उद्युक्तः, तदा तूर्णीं तिष्ठतु इति विष्णुः दृष्ट्या तं सूचितवान्।

तदनन्तरं क्षीरसमुद्रतः ऐरावतनामकः श्वेतः दन्तचतुष्टययुक्तः गजः, पारिजातवृक्षः, अप्सरसः च उद्भूताः। अनन्तरं देदीप्यमाना लक्ष्मीदेवी अपि उपरि आगतवती। उपरि आगता सा विष्णोः वक्षःस्थलम् आश्रितवती। लक्ष्म्या सह चन्द्रः अपि क्षीरसमुद्रतः उदभूतः।

एवं रीत्या सर्वेषां जननानन्तरं धन्वन्तरिः अमृतकलशं गृहीत्वा उपरि आगतवान्।

तदा दैत्याः झटिति धन्वन्तरिहस्तात् अमृतकलशम् आकृष्य दूरं धावितवन्तः। अनन्तरं एकत्र सम्भूय स्थित्वा अधिकाधिकस्य अमृतस्य प्राप्त्यर्थं परस्परं विवादमग्नाः जाताः।

तदा देवैः प्रार्थितः विष्णुः "चिन्ता मास्तु। इदानीम् एव मायोपायेन तत् अमृतं यथा भवताम् एव अधीनं भवेत्, तथा करिष्यामि" इति अभयवचनानि उक्तवान्।

अनन्तरं विष्णुः मनोहरं मोहिनीरूपं धृत्वा दैत्यानां समीपं गतवान्। ते दैत्याः तां मोहिनीं दृष्ट्वा मोहाक्रान्ताः मतिभ्रान्ताः च अभवन्। "भवती अपि अमृतम् इच्छति वा? इदानीम् अस्मासु अमृतप्राप्त्यर्थं विवादः उत्पन्नः अस्ति। भवती समानरूपेण विभागं कर्तुं शक्नोति वा? भवती अपि किञ्चित् स्वीकरोतु" इति उक्तवन्तः दैत्याः।

"अहं समीचीनतया विभज्य दास्यामि। किन्तु मम कार्यमध्ये कोऽपि आक्षेपः न करणीयः" इति उक्तवती मोहिनी। दानवाः तत् अङ्गीकृतवन्तः। अमृतकलशः मोहिन्याः हस्ताधीनः अभवत्।

मोहिन्याः आदेशानुसारेण देवाः एकस्यां पङ्क्तौ, दैत्याः अन्यस्यां पङ्क्तौ च उपविष्टवन्तः। प्रथमं मोहिनी देवानां पङ्क्तौ च अमृतस्य वितरणम् आरब्धवती। वचनबद्धाः दानवाः किमपि विरोधं न प्रकटितवन्तः। सर्वेषां देवानां अमृतपानानन्तरं विष्णुः मोहिनीरूपम् उपसंहृतवान्।



विष्णुः मोहिनीरूपं धृत्वा, दैत्यान् भ्रामयित्वा, अमृतं देवेभ्यः दत्तवान् इति वृत्तान्तं ज्ञात्वा शिवः वृषभवाहनः भूत्वा, पार्वत्या सह विष्णुं द्रष्टुम् आगतवान्। "अहं भवतः सर्वान् अवतारान् दृष्टवान्। इदानीं मोहिन्याः अवतारः गृहीतः इति श्रुतम्। तस्य अवतारस्य दर्शनकुतूहलेन आगतवान् अहम्। दर्शयति वा ?" इति पृष्टवान्।

"दैत्यानां सम्मोहनार्थं गृहीतं रूपं भवान् अपि द्रष्टुम् अर्हति एव। मम कोऽपि आक्षेपः नास्ति। पश्यतु" इति वदन् विष्णुः अदृश्यः अभवत्, किञ्चिद्दूरे मोहिनीरूपेण कन्दुकक्रीडामग्नः दृष्टः च।

तस्याः मोहिन्याः दर्शनसमनन्तरम् एव शिवः पार्वतीं प्रमथगणान् च विस्मृतवान्। सः मोहिनीम् अनुसृत्य गन्तुं प्रवृत्तः। अत्रान्तरे एतत्सर्वं विष्णोः मायायाः फलम् इति शिवः स्मृतवान्। अनन्तरं विष्णुः मोहिनीरूपं परित्यज्य शिवस्य सौहार्दं प्रशंसितवान्।

तदनन्तरं विष्णोः अनुज्ञां प्राप्य शिवः पार्वत्या सह कैलासं प्रति गतवान्।

पूर्वकाले अयोध्यानगरीं बाहुनामकः महाराजः पालयति स्म। तदा हैहयनामकः कश्चित् अयोध्यानगरस्य उपरि आक्रमणं कृत्वा बाहुं राज्यच्युतं कृतवान्। बाहुमहाराजः पत्नीभिः सह वनं गतवान्।

वनवाससमये बाहुराजस्य पत्नीषु एका गर्भिणी अभवत्। किञ्चित्कालानन्तरं बाहुः मरणं प्राप्तवान्। तस्य गर्भवती पत्नी सहगमनं कर्तुं निश्चितवती। तदा और्वनामकः कश्चित् मुनिः तां सान्त्वयित्वा तस्याः चितारोहणं निवारितवान्। "भवती एकं श्रेष्ठं पुत्रं प्राप्स्यति" इति उक्तवान् च।

एतं विषयं ज्ञात्वा मत्सराविष्टाः तस्याः सपत्न्यः तां हन्तुं निश्चित्य तस्याः आहारे विषं मिश्रितवत्यः। तेन विषेण सहितः एव पुत्रः जातः। तेन कारणेन तस्य पुत्रस्य 'सगरः' इत्येव नाम निश्चितम्।

कालक्रमेण सगरः चक्रवर्ती भूत्वा और्वस्य साहाय्येन अनेकान् अश्वमेधयागान् कृतवान्।

तस्य सुमती केशिनी इति पत्नीद्वयम्। किन्तु तस्य सन्तानप्राप्तिः न अभवत्। तदा सः और्वं दृष्ट्वा स्वीयां समस्यां निवेदितवान्।

और्वः सगरस्य वृत्तान्तं श्रुत्वा- "भवतः सन्तानप्राप्तिः भविष्यति। तदर्थं भवान् पत्नीभ्यां सह कैलासं गत्वा तपः आचरतु" इति सूचितवान्। तस्य सूचनानुसारेण सगरः पत्नीभ्यां सह कैलासं गत्वा शिवध्यानं कुर्वन् तपः तप्तवान्। अन्ते शिवः प्रत्यक्षीभूय 'सन्तानप्राप्तिः अस्तु' इति अनुगृहीतवान्।

सगरः नगरं प्रत्यागतवान्। कालान्तरे सुमती केशिनी च एकैकं पुत्रं प्रसूतवत्यौ। किन्तु सुमत्याः पुत्रः तु पिण्डरूपः एव आसीत्। तदा और्वः समागत्य जातं वृत्तान्तं ज्ञात्वा "सुमत्याः पुत्ररूपात् पिण्डात् षष्टिसहस्रं पुत्राः उद्भवन्तु" इति संकल्पं कृत्वा, पिण्डतः षष्टिसहस्रभागान् कृत्वा, तान् षष्टिसहस्रकुण्डेषु स्थापितवान्। तेभ्यः कुण्डेभ्यः षष्टिसहस्र-कुमाराः जाताः।

केशिन्याः पुत्रः असमञ्जसः। सः सर्वदा भयङ्करकार्येषु मग्नः भवति स्म। सः महान् दुष्टः क्रूरः च जातः। भिक्षुकान् वृद्धान् च नद्यां पातयति। तस्य पीडां सोढुम् अशक्ताः पौराः सगरं रक्षणार्थं प्रार्थितवन्तः। तदा सगरः असमञ्जसं नगरात् निष्कासितवान्।

तदनन्तरं सगरः अश्वमेधयागं कर्तुं निश्चयं कृत्वा, दिग्विजयार्थं यागाश्वं प्रेषितवान्। तेन सह षष्टिसहस्रपुत्रान् अपि प्रेषितवान्।

सगरेण विसृष्टः यागाश्वः अनेकेषु देशेषु सञ्चरन्, मध्ये कदाचित् केनापि कारणेन अदृश्यः अभवत्। सगरकुमाराः तम् अश्वम् अन्विष्य श्रान्ताः। भूलोके कुत्रापि अश्वः न दृष्टः। तदा ते अयोध्यां प्रत्यागत्य यागाश्वस्य अदर्शनवृत्तान्तं पितरं निवेदितवन्तः।

सगरः तु महता क्रोधेन तान् भर्त्सयन्, "अश्वं विना भवतां नगरप्रवेशार्थम् अनुमतिः नास्ति" इति आज्ञां कृतवान्। सगरकुमाराः पुनः अश्वस्य अन्वेषणार्थं प्रस्थितवन्तः।





# देव्याः आभरणानि

पुरा नागवरनामके ग्रामे देव्याः एकः पुरातनः आलयः आसीत्। शिवानन्दः तस्य अर्चकः। नागवरग्रामतः किञ्चिद्दूरे केशवपुरम् इति अन्यः एकः बृहद्ग्रामः। केशवपुरस्य भूस्वामी देव्याः परमभक्तः। भक्तः धनिकः च सः भूस्वामी रथोत्सवसमये मुक्तावली, सुवर्णमेखला कटककङ्कणम् इत्यादीनि आभरणानि कारयित्वा देव्यै अर्पितवान्। एतैः आभरणैः अलङ्कृतायाः देव्याः शोभा पूर्वापेक्षया द्विगुणिता अभवत्। तेषाम् आभरणानां रक्षणदायित्वम् अपि शिवानन्दस्य उपरि निक्षिप्तम्।

शिवानन्दस्य पत्नी गिरिजा। सा तु साक्षात् चण्डी एव। देव्याः कृते समर्पितानि नूतनानि आभरणानि सा दृष्टवती। तेषाम् उपरि तस्याः मनसि महती आशा उत्पन्ना। प्रतिदिनं वर्धमानां ताम् आशां त्यक्तुम् असमर्था सा तानि आनीय ददातु इति पतिम् पीडयितुम् आरब्धवती।

पत्न्याः एताम् अनुचिताम् आशां दृष्ट्वा शिवानन्दः भीतः। कुपितः सः “किम् एतत् अनुचितम्? किं भवत्याः विनाशकालः सन्निहितः वा? सामान्यनार्या पूज्यायाः देव्याः आभरणानां धारणं महापापकरम्। दुराग्रहः मास्तु। किञ्चित्कालं तूष्णीं तिष्ठतु। आभरणानां तावती इच्छा अस्ति चेत्, यथा-कथञ्चित् अहम् एव अन्यानि आभरणानि कारयामि” इति उक्तवान्।

किन्तु गिरिजा अस्य वचनं न अङ्गीकृतवती। “यदा अहं वृद्धा भविष्यामि, तदा भवान् आभरणानि कारयितुं समर्थः भवेत् प्रायः। तं विचारं त्यजतु। अद्य रात्रौ एव आभरणानि न आनयति चेत्, श्वः प्रातः अस्माक गृहस्य पृष्ठभागे वर्तमानस्य निम्बवृक्षस्य शाखायां मम शवं पश्यति भवान्” इति पतिं

“श्रीमाता”



एकस्मिन् कोणे तूष्णीं स्थितवती।

यदा शिवानन्दः बहिः गतवान्, तदा द्वितीया देवी प्रथमदेव्याः समीपम् आगत्य "सः भवत्याः आभरणानि अपहृत्य गच्छन् अस्ति। तथापि भवती किमर्थं तूष्णीम् अस्ति? आभरणरहिता भवती शोभाहीना भवति। झटिति तम् अर्चकं दण्डयतु" इति उक्तवती।

तदा देवी मन्दं स्मयमाना "एषः शिवानन्दः मम परमभक्तः। सः प्रथमं क्षमा-प्रार्थनां कृत्वा, पुनः आनीय प्रत्यर्पयिष्यामि इति प्रतिज्ञाय आभरणानि गृहीतवान्। तानि प्रत्यर्पयितुम् अहं चतुर्दिनात्मकम् अवधिं दास्यामि। तस्य पत्नी आभरणानि तदा न प्रत्यर्पयिष्यति चेत्, तस्याः शिरः भग्नं भविष्यति, सा मरिष्यति" इति उक्तवती।

आभरणानां ग्रन्थिं गृहीत्वा बहिः गच्छन् शिवानन्दः देव्याः वचनानि श्रुतवान्। सः भयेन कम्पमानः, देव्याः विग्रहं पश्यन्, स्तम्भितः इव तत्रैव स्थितवान्। किन्तु अनन्तरं न कोऽपि शब्दः श्रुतः। तत् सर्वं स्वकीयः भ्रमः स्यात् इति तस्य संशयः जातः। यथाकथञ्चित् धैर्यम् अवलम्ब्य शिवानन्दः देवालयस्य द्वारं पिधाय, कीलयित्वा आभरणानां ग्रन्थिं गृहीत्वा गृहम् आगतवान्। तस्य पत्नी गिरिजा आभरणानि दृष्ट्वा

भाययन्ती, अश्रूणि स्रावयन्ती उक्तवती।

सा तथा एव कुर्यात् इति शिवानन्दस्य महद् भयम् अभवत्। तस्यां रात्रौ सः देव्याः पुरतः अञ्जलिबद्धः स्थित्वा "अम्ब, मम पत्न्याः कलहस्वभावं भवती जानाति एव। इदानीं भवत्याः आभरणानि नयामि। यथाकथञ्चित् तां युक्त्या समाश्वस्य, शीघ्रम् एव आभरणानि पुनः आनीय प्रत्यर्पयिष्यामि। एषः अक्षम्यः अपराधः। तथापि कृपया अहं क्षन्तव्यः" इति सम्प्रार्थ्य देव्याः सर्वाणि आभरणानि उन्मुच्य एकं ग्रन्थिं बद्धवान्।

यदा शिवानन्दः बहिः गन्तुं प्रवृत्तः, तदा देव्याः सखीरूपा अन्या काचन देवी अन्तः प्रविशन्ती, शिवानन्दस्य कार्यं पश्यन्ती झटिति

अत्यानन्दम् अनुभवन्ती तदानीम् एव तानि सर्वाणि धृतवती।

शिवानन्दः पत्नीं क्रोधेन पश्यन्, देवालये श्रुतानि देव्याः वचनानि कथितवान्। सा तु अधिकतरक्रोधेन अनादरेण च पतिं पश्यन्ती "स्यात् एवम्! भवान् तु महाभीरुः! अतः तथा वचनानि श्रूयन्ते एव। भीतिग्रस्तः किमपि शृणोति! देव्या आभरणानि नाम भवतः महती भीतिः। भ्रमाधीनं भवन्तं धिक्! अहम् आभरणानि नैव प्रतिदास्यामि" इति उक्तवती।



"हा! हा! मातः! मम पत्नी भवत्या एव रक्षणीया" इति शिवानन्दः मनसि एव प्रार्थितवान्।

त्रीणि दिनानि अतीतानि। गिरिज़ा तु देव्याः आभरणानि दातुं न इच्छति। देव्याः वचनेषु शिवानन्दस्य नितरां विश्वासः। किङ्कर्तव्यतामूढः सः भयग्रस्तः अभवत्।

तस्यां रात्रौ आभरणसहिता एव गिरिजा शयित्वा निद्रितवती। मध्यरात्रे एकः चोरः शिवानन्दस्य गृहं प्रविष्टवान्। सः निद्रामग्नायाः गिरिजायाः शरीरतः सर्वाणि आभरणानि महता कौशलेन उन्मुच्य गृहीतवान्। अनन्तरं तेषाम् आभरणानां ग्रन्थिना सह देव्याः आलयं प्रति प्रस्थितवान्।

देव्याः आभरणानि अपि अपहर्तुं मनसि निश्चित्य सः तत्र गतवान्। किन्तु यदा सः देवालयस्य समीपं गतवान्, तदा तालः भिन्नः, द्वाराणि उद्घाटितानि एव आसन्। सर्वं दृष्ट्वा सः आश्चर्यचकितः अभवत्। इतः पूर्वम् एव अन्यः कश्चित् चोरः अत्र आगत्य देवालयं प्रविष्टवान् स्यात् इति ज्ञात्वा, हस्ते एकं बृहद्दण्डं गृहीत्वा स्वयम् अपि देवालयं प्रविष्टवान्।

वस्तुतः ततः किञ्चित् पूर्वं देवालयं प्रविष्टः अन्यः चोरः आभरणरहितायाः देव्याः विग्रहं दृष्ट्वा स्तम्भितः अभवत्। तानि आभरणानि अन्यः, यः कश्चित् अपहृत्य गतवान् वा, अथवा तेषां संरक्षणार्थम् अर्चकः एव स्वगृहं नीतवान् वा इति तस्य संशयः जातः।

निराशया खिन्नः सः बहिः आगतवान् ।

तस्मिन् एव समये आभरणसहितः दण्डेन सह आगच्छन् चोरः दृष्टः । सः स्वीयं दण्डम् उपरि उन्नीय "किं भोः ! मम समक्षम् एव आभरणानि अपहृत्य पलायते वा ?" इति वदन् बहिः आगच्छतः चोरस्य शिरसि दण्डेन बलात् ताडितवान् ।

एतादृशं किमपि भवेत् इति द्वितीयचोरेण पूर्वम् एव तर्कितम् आसीत् । सः तत्क्षणे एव स्वीयदण्डेन प्रथमं ताडितवान् । एवंरीत्या परस्परताडनेन द्वौ अपि अचेतनौ भूत्वा अधः पतितवन्तौ । अन्यत्र प्रातः गिरिजा उत्थाय, स्वीयम् आभरणरहितं शरीरं दृष्ट्वा, उच्चैः आक्रोशं कुर्वती पतिं जागरितवती । सम्भ्रान्तः शिवानन्दः झटिति उत्थाय, आकाशः एव शिरसि पतितः इति इव भीत्या कम्पमानः देवालयं प्रति धावितवान् । तत्र अचेतनौ चोरौ, तयोः पार्श्वे पतितम् आभरणग्रन्थिं च दृष्ट्वा, किं प्रवृत्तं स्यात् इति किञ्चित् तर्कयन् आश्चर्यं प्राप्तवान् ।

शिवानन्दः प्रप्रथमं ग्रन्थिं गृहीत्वा आभरणैः देवीम् अलङ्कर्तुं प्रवृत्तः । तदा गिरिजा अपि तत्र आगतवती । पत्नीं दृष्ट्वा शिवानन्दः "किं रे, इदानीं देव्याः माहात्म्यं ज्ञातवती वा ? दिनचतुष्टयानन्तरम् आभरणानि न प्रत्यर्प्यन्ते चेत्, शिरसः स्फोटेन भवत्याः मरणं भवति इति देव्याः वचनं असत्यम् इति भवती उक्तवती किल ? मम भ्रमः जातः अस्ति इति मां भर्त्सितवती खलु ? इदानीं पश्यतु । केनापि पुण्येन सा महामाता भवतीम् उज्जीवितवती" इति उक्तवान् ।

तदा गिरिजा देव्याः विग्रहस्य पुरतः साष्टाङ्गं नमस्कृत्य "मातः, अहं मूर्खा अस्मि । मम पतिः भवत्याः भक्तः इति कारणात् मम अपराधं क्षान्त्वा मां रक्षितवती । इतःपर अहम् अपि भवत्याः भक्ता अस्मि" इति दीनभावेन प्रार्थितवती । दुष्टस्वभावं त्यक्तवती च ।





# चाणक्यकथा

पूर्वं चणकनामके ग्रामे चणी नाम ब्राह्मणः आसीत्। सः जैनमतावलम्बी। तस्य पत्न्याः नाम चणीश्वरी। तयोः अद्वितीयः पुत्रः चाणक्यः।

चाणक्यस्य जन्म एव असाधारणरीत्या अभवत्। जन्मसमये एव तस्य मुखे दन्ताः आसन्। एतस्य विचित्रजन्म श्रुत्वा मुनयः "यः दन्तसहितः एव जन्म प्राप्नोति सः देशस्य शासकः भविष्यति" इति भविष्यफलम् उक्तवन्तः।

चणी ऐहिकसुखेषु निरासक्तः। सः सर्वदा परतत्त्वचिन्तने मग्नः भवति स्म। 'मम पुत्रः अपि ऐहिकसुखेषु आसक्तः न भवतु' इति तस्य विचारः। "भोगभाग्येषु आसक्तिः अस्ति चेत् एव किल राजपदव्याम् आसक्तिः उत्पद्यते ? ऋषीणां वचनम् असत्यं यथा स्यात् तथा करोमि" इति चिन्तितवान् सः। अतः पुत्रस्य शिशोः सर्वान् दन्तान् निष्कासितवान्। "एवं कृतं चेत् अपि एषः चाणक्यः परोक्षतया राज्यपालनं करिष्यति एव। जातकफलं कदापि अन्यथा न भविष्यति" इति उक्तवन्तः ज्योतिषिकाः।

चाणक्यः क्रमशः सर्वशास्त्राणि अधीत्य महत् शास्त्रपाण्डित्यं प्राप्तवान्। प्राप्तवयस्कः सन् युक्ते काले काञ्चित् निर्धनां ब्राह्मणकन्यां परिणीतवान् च।

कदाचित् चाणक्यस्य पत्नी अग्रजस्य विवाहार्थं पितृगृहं गतवती। तत्र तस्याः भगिन्यः अपि उपस्थिताः आसन्। तासां पतयः उच्चोद्योगे स्थिताः यथेष्टं धनं सम्पाद-यन्ति स्म। अतः ताः चाणक्यस्य दारिद्र्यं बहुप्रकारेण वर्णयित्वा उपहसितवत्यः।

एतेन अपमानिता चाणक्यस्य पत्नी दुःखेन गृहं प्रत्यागतवती। चाणक्यः पत्न्याः

"जैनपुराणस्य कथा"



दुःखस्य कारणं ज्ञातवान्। अनन्तरं सः कोपेन शिरः कम्पयन् दन्तान् परस्परं पीडयन् ''अहं धनार्जनं करिष्यामि एव'' इति दृढसङ्कल्पं कृत्वा तत्क्षणे एव गृहात् निर्गतवान्।

तदानीं पाटलीपुत्रं नन्दराजः पालयन् आसीत्। सः ब्राह्मणान् विशेषतया सत्करोति इति चाणक्यः श्रुतवान् आसीत्। अतः सः पाटलीपुत्रं गत्वा राजास्थाने रिक्तेषु आसनेषु उन्नते आसने उपविष्टवान्। तच्च नन्द-महाराजस्य आसनम् आसीत्।

किञ्चित्कालानन्तरं नन्दराजः पुत्रेण सह तत्र आगतवान्। तदा तत्रत्या परिचारिका चाणक्याय अन्यत् आसनं प्रदर्शितवती। किन्तु चाणक्यः आसनात् न उत्थितवान्। अपि तु जलपात्रं कृष्णाजिनं च पार्श्वस्थे एकैकस्मिन् आसने स्थापयित्वा स्वस्थम् उपविष्टवान्। एतत् औद्धत्यं सोढुम् अशक्ता परिचारिका चाणक्यम् आसनात् बलात्कारेण अवतार्य बहिः निष्कासितवती।

तदा चाणक्यः कोपेन- ''गर्वयुतस्य एतस्य नन्दस्य वंशम् एव उन्मूलयिष्यामि'' इति प्रतिज्ञां कृत्वा ततः गतवान्।

'अन्यद्वारा राज्यशासनं कारयितुं मम योग्यता अस्ति। तथा जातके सूचितम् अस्ति' इति चाणक्यः जानाति। अतः सः प्रतिनिधित्वेन राज्यपालनं कर्तुं योग्यं पुरुषम् अन्वेष्टुम् आरब्धवान्। एवम् अन्वेषणं कुर्वन् मयूर-पालकानां ग्रामम् आगतवान्।

तद्ग्रामीणाः महाराजस्य मयूरान् पोषयन्तः जीवन्ति स्म। तद्ग्रामप्रमुखस्य पुत्री गर्भवती। सा चन्द्रं पातुम् इच्छति। एतां वार्तां चाणक्यः श्रुतवान्। गर्भिण्याः आशा येन केनापि उपायेन पूरणीया एव इति ग्रामीणानां विश्वासः।

''यदि एतस्याः जनिष्यमाणं पुत्रं मह्यं यच्छन्ति तर्हि अहम् एतस्याः आशां पूर-यिष्यामि'' इति ग्रामप्रमुखम् उक्तवान् चाणक्यः। ग्रामप्रमुखः चाणक्यस्य प्रस्तावम् अङ्गीकृतवान्।

चाणक्यः एतदर्थम् एकं लघुकुटीरं निर्माय



तस्य छदिकायां रन्ध्रम् एकं कारितवान् । रात्रौ चन्द्रकिरणाः यत्र पतन्ति तत्र क्षीरपात्रं स्थापयित्वा गर्भिणीं तत्र नीतवान्। "एषः एव चन्द्ररसः। पिबतु" इति ताम् उक्तवान् च। यदा सा तस्य पाने मग्ना तदा उपरि स्थापितः कश्चन हस्तसाहाय्येन रन्ध्रं पिहितवान् । 'अहं चन्द्रम् एव पीतवती' इति भ्रान्त्या सा गर्भिणी तृप्ता अभवत्। अनन्तरं तस्याम् उत्पन्नस्य पुत्रस्य नाम चन्द्रगुप्तः इति निश्चितम् अभवत् ।

एतदनन्तरं चाणक्यः धनार्जनार्थं प्रस्थितः। देशाटनं कृत्वा केषाञ्चित् वर्षाणाम् अनन्तरं सः पुनः तं ग्रामम् आगतवान्। मार्गे सः कांश्चन बालकान् दृष्टवान्। तत्र एकः महाराजः इव व्यवहरति स्म। अन्ये तस्य आज्ञां विधेयतया श्रद्धया च पालयन्ति स्म। स एव चन्द्रगुप्तः।

चाणक्यः बालस्य सामर्थ्यं परीक्षितुम् इच्छन् तस्य समीपं गत्वा 'महाराज! मह्यं किमपि ददातु' इति प्रार्थितवान् ।

"ब्राह्मणोत्तम! तत्र दृश्यमानं गोसमूहं भवते दत्तवान् अस्मि, स्वीकरोतु। कोऽपि विरोधं न प्रदर्शयति। यतः एषा मम आज्ञा" इति उक्तवान् चन्द्रगुप्तः।

इतरबालकानां द्वारा एषः एव चन्द्रगुप्तः इति चाणक्यः ज्ञातवान्। "भोः! यदि भवान् महाराजः तर्हि भवदीयं राज्यम् अपि किञ्चन भवेत्। तत् अहं दापयामि, आगच्छतु" इति वदन् तम् आत्मना सह नीतवान्। चन्द्रगुप्तस्य मातापित्रोः समीपं गत्वा पूर्वतनं वचनं स्मारयित्वा, तयोः अनुमतिं प्राप्य चन्द्रगुप्तं नीतवान्। तयोः गुरुशिष्यभावः क्रमशः गाढः जातः।

चाणक्यः आत्मना सम्पादितेन धनेन एकं सैन्यं सज्जीकृतवान्। अकस्मात् पाटलीपुत्रस्य उपरि आक्रमणं कृतवान् च। किन्तु नन्दस्य बलवत्या सेनया चाणक्यः अवमानकरम् अपजयं प्राप्तवान्।

चन्द्रगुप्तं चाणक्यं च अनुसृत्य सैनिकाः आगतवन्तः। मार्गे चाणक्यः एकम् उपायम्



आश्रितवान्। स्वयं तपस्वी इव तीरे उपविश्य चन्द्रगुप्तं जले स्थातुम् उक्तवान्।

कश्चन अश्वारोही चाणक्यस्य समीपम् आगत्य "अत्र कोऽपि धावन् आगतवान् वा?" इति पृष्टवान्। चाणक्यः हस्तसङ्केतेन चन्द्रगुप्तं प्रदर्शितवान्।

सः सैनिकः झटिति अश्वात् अवतीर्य खड्गं भूमौ स्थापयित्वा जले अवतर्तुम् उद्युक्तः। तदा चाणक्यः विद्युद्वेगेन उत्थाय तदीयेन खड्गेन तस्य शिरः छेदितवान्।

अनन्तरं चाणक्यः चन्द्रगुप्तः च अश्वम् आरुह्य पलायनं कृतवन्तौ। मार्गे चाणक्यः चन्द्रगुप्तं पृष्टवान्- "जले समीपम् आगच्छन्तं सैनिकं दृष्ट्वा भवान् किं चिन्तितवान्?" इति।

"भवतः वचनस्य अनुसरणं मम कर्तव्यम्। युक्तं किम् इति भवान् जानाति एव इति अहं चिन्तितवान्" इति उक्तवान् चन्द्रगुप्तः।

"एषः विधेयः। महाराजपदवीं प्राप्य अपि विधेयतया एव व्यवहरिष्यति" इति चिन्तितवान् चाणक्यः।

अत्रान्तरे अन्यः अश्वारोही तयोः समीपम् आगतवान्। चाणक्यः एतस्य निवारणार्थं अन्यम् उपायं चिन्तितवान्। दूरतः आगच्छन्तं सैनिकं दृष्ट्वा, सरोवरतीरे वस्त्रं क्षालयतः रजकस्य समीपं गत्वा- 'भोः! भवतः विषये कुपितः महाराजः भवतः बन्धनार्थं सैनिकं प्रेषितवान्" इति उक्तवान्। सः रजकः भीत्या पलायितवान्। चाणक्यः रजकस्य स्थाने स्थित्वा चन्द्रगुप्तं जले अवतारितवान्। पूर्ववत् एव उपायेन एतम् अपि मारितवान् चाणक्यः। चन्द्रगुप्तः चाणक्यः च पुनः अग्रे गतवन्तौ।

बुभुक्षया पीडितौ तौ सायङ्कालसमये कञ्चित् ग्रामं प्राप्तवन्तौ। 'कस्मिन् गृहे आहारः लभ्येत?' इति चिन्तयन्तौ तौ मार्गे गच्छन्तौ एकां घटनां दृष्टवन्तौ। एकस्मिन् गृहे एका वृद्धा माता पुत्राणां कृते अन्नं परि-विष्टवती आसीत्। पुत्रेषु एकः त्वरया उष्णे अन्ने हस्तं स्थापितवान्। तस्य हस्तः दग्धः।



तदा सा माता उक्तवती- "अये ! भवान् अपि चाणक्यः इव मन्दबुद्धिः" इति ।

'अपरिचिता एषा कथं मम विषये एवम् अभिप्रायं प्रकटयति ?' इति आश्चर्यम् अनुभवन् चाणक्यः तत् गृहं प्रविष्टवान् । 'एवं कथने किं कारणम्' इति तां मातरं पृष्टवान् च ।

"अन्नं यदा शीतलं भवति तदा किल भोक्तव्यम् ? तत्रापि परितः स्थितः अन्नभागः प्रथमं भोक्तव्यः, न तु मध्ये एव हस्तः स्थापनीयः । चाणक्येन अपि एवं न आचरितम् । प्रथमं तेन राज्यस्य सीमाप्रदेशाः जेतव्याः आसन् । स तु साक्षात् राजधान्याः उपरि एव आक्रमणं कृतवान् । एतत् मन्दबुद्धेः कार्यं न वा ?" इति पृष्टवती सा वृद्धा ।

एतेन चाणक्यस्य विवेचनाशक्तिः जागरिता अभवत् । सः हिमवत्पर्वन्तं गत्वा पर्वतराजस्य मैत्रीं सम्पादितवान् । तयोः मध्ये सन्धिः जातः यत् नन्दराजं जेतुं पर्वतराजेन साहाय्यं करणीयम्, प्रतिफलरूपेण युद्धानन्तरं प्राप्यमाने राज्ये चाणक्येन पर्वतराजाय अर्धं दातव्यम् इति ।

एतदनुसारं चाणक्यः पर्वतराजस्य साहाय्येन पाटलीपुत्रस्य सीमाप्रान्ते स्थितान् प्रदेशान् एकैकशः जितवान् । तत्सन्दर्भे एकं नगरम् अजेयतया स्थितम् । 'एतत् नगरं कथं जेतव्यम् ?' इति बहुधा विचिन्त्य चाणक्यः एकम् उपायम् आश्रितवान् ।

सः संन्यासिनः वेषं धृत्वा नगरं प्रविष्टवान् । नगरे सप्तमातृकाणां देवालयः एकः आसीत् । 'तत्रत्याः सप्तदेवताः नगररक्षणं कुर्वन्ति' इति जनानां विश्वासः । शत्रोः आक्रमणेन अतीव खिन्नाः केचन संन्यासिवेषे स्थितस्य चाणक्यस्य समीपम् आगतवन्तः । "श्रीमन् ! एतत् आक्रमणं कदा निवारितं भवेत् ?" इति पृष्टवन्तः च ।

"यावत् देवालये स्थिताः सप्तदेवताः मन्दिरतः न निर्गच्छन्ति तावत् आक्रमणं न अपगच्छति" इति चाणक्यः तान् उक्तवान् ।

मूढाः पौराः चाणक्यस्य वचने विश्वस्य

आलये स्थितान् सप्त देवताविग्रहान् निष्कासितवन्तः ।

तद्दिने एव चाणक्यः चन्द्रगुप्ताय पर्वतराजाय च गुप्तसन्देशं प्रेषितवान् । तदनुगुणं तौ आक्रमणं शिथिलीकृत्य किञ्चिद्दूरं प्रतिगतवन्तौ । जनाः आक्रमणम् अपगतम् इति सन्तोषेण नृत्यन्तः उत्सवम् आचरितवन्तः । तत्सन्दर्भे चन्द्रगुप्तपर्वतराजयोः सेना अकस्मात् आक्रमणम् अकरोत । तत् नगरं वशे आगतम् ।

अनन्तरं चाणक्यः पाटलीपुत्रस्य उपरि आक्रमणं कृतवान् । अस्मिन् युद्धे पराजितः नन्दः चाणक्यं शरणं गतवान् । चाणक्यः नन्दाय सजीवं गन्तुम् अनुमतिं यच्छन्- "भवता एषः देशः त्यक्तव्यः । गमनसमये रथेन यावत् नेतुं शक्यते तावन्मात्रम् ऐश्वर्यं नेतुम् अर्हति भवान्" इति ।

एतदनुगुणं नन्दः पत्नीभ्यां पुत्र्या च सह अमूल्यानि रत्नाभरणादीनि स्वीकृत्य ततः निर्गतवान् ।

यदा ते किञ्चिद्दूरम् एवं गतवन्तः तदा अभिमुखतया रथम् आरुह्य चन्द्रगुप्तः आगतवान् । तं दृष्टवत्याः नन्दकुमार्याः दुर्धरायाः मनसि गाढं प्रेमभावः उत्पन्नः । पुत्र्याः मनोभावं ज्ञात्वा नन्दः पुत्रीम् उक्तवान्- "पुत्रि ! भवती यदि स्वयंवरपद्धत्या कमपि परिणेष्यति तर्हि मम कोऽपि आक्षेपः नास्ति" इति ।

पितुः वचनं श्रुत्वा दुर्धरा रथात् अवतीर्य चन्द्रगुप्तस्य रथम् आरूढवती । तत्समये चन्द्रगुप्तस्य रथस्य नव कीलकानि युगपत् भग्नानि अभवन् । एतत् अपशकुनम् इति चिन्तयन् चन्द्रगुप्तः तां निराकर्तुम् उद्युक्तः ।

तदा चाणक्यः तं निराकरणात् निवारयन् उक्तवान्- "एतत् शुभशकुनम् एव । भवतः वंशीयाः नव सन्ततिं यावत् राज्यपालनं करिष्यन्ति इति एतस्य अर्थः" इति ।

[अग्रिमसञ्चिकायां समाप्ता भविष्यति]





# प्रामाणिकः चोरः

बस्रादेशस्य पालकः सुल्तान् अमीरः। कदाचित् नगराधिकारी एकं युवकं तस्य समीपम् आनीय "महाप्रभो, एषः अत्यन्त-निपुणः महाचोरः। ह्यः रात्रौ धारावृष्टौ एषः अस्माकं नगरस्य धनिकेषु अन्यतमस्य दावूद-खानस्य गृहं चौर्यार्थं प्रविष्टवान्। तत्र चौर्यसमये एव निगृहीतः बन्धितः च। मुग्धः साधुः इव दृश्यते केवलम्" इति उक्तवान्।

अमीरः तिरस्कारभावेन युवकम् एकवारम् अवलोकितवान्। किन्तु उत्तरक्षणे एव आश्चर्यचकितः अभवत् सः। तस्य युवकस्य मुखे किमपि चौर्यलक्षणं न आसीत्। प्रत्युत निर्लक्ष्यतापूर्वकं धैर्यम् एव दृश्यते स्म।

"किं भोः! चौर्यं कर्तुम् एव भवान् तत् गृहं प्रविष्टवान् वा? सत्यं वदतु" इति अमीरः युवकं पृष्टवान्।

"सत्यं महाप्रभो! तदेव कारणम्" इति उक्तवान् युवकः विनयेन।

"एवं वा? तर्हि भवतः अपराधस्य कः कः दण्डः इति जानाति वा? चौर्यार्थम् उपयुक्तस्य भवतः हस्तद्वयस्य छेदनं भविष्यति!" इति उक्तवान् अमीरः।

युवकः शिरः चालयित्वा तूष्णीं स्थितवान्। स्वीयं निर्दोषित्वं कथयितुं सः न इच्छति इति अमीरः ज्ञातवान्। तादृशवैराग्यस्य अवश्यं किमपि विशिष्टं कारणं स्यात्।

"अस्तु, इदानीम् एतं नीत्वा कारागारे स्थापयतु। श्वः एषः दण्डं प्राप्नुयात्। तावत्पर्यन्तम् एषः किञ्चित् आलोचयतु" इति अमीरः नगराधिकारिणम् आज्ञापितवान्।

तस्यां रात्रौ अमीरः कारागारस्य समीपं गतवान्। तत्र सः कस्यचित् सुमधुरं गान-ध्वनिं श्रुतवान्। अन्तः गत्वा अमीरः पश्यति यत् श्वः दण्डं प्राप्नुवन् युवकः एव सन्तोषेण



तस्य वचनं श्रुत्वा स्वीयसूचनानुसारेण एव एषः श्वः व्यवहरेत् इति अमीरस्य विश्वासः अभवत्। परेद्युः तस्य दण्डानुभवं द्रष्टुं सहस्रशः नगरवासिनः वधास्थाने सम्मिलिताः। अमीरः अधिकारिणः च सर्वे आगत्य उचितेषु आसनेषु उपविष्टवन्तः। भटाः युवकं तत्र आनीतवन्तः।

तदा अमीरः युवकं दृष्ट्वा उच्चस्वरेण "भोः युवक! चौर्यं कर्तुं भवान् तत् गृहं न न प्रविष्टवान्. तस्मिन् गृहे भवतः परिचितः कश्चित् अस्ति। तस्य दर्शनार्थं भवान् गतवान्। सत्यं खलु?" इति पृष्टवान्।

"प्रभो, चौर्यं कर्तुम् एव अहं गतवान्। तत्र मम अन्यत् किमपि कार्यं नास्ति" इति उक्तवान् युवकः।

तस्य उत्तरं श्रुत्वा अमीरः क्रुद्धः अभवत्। 'दण्डतः रक्षितुं दत्तां सूचनाम् अपि एषः उपेक्षितवान्। एषः नूनं मूर्खः स्यात्, अथवा उन्मत्तः वा स्यात्' इति चिन्तितवान् अमीरः।

"अस्तु, एतस्य हस्तद्वयम् अपि छिन्दन्तु" इति आज्ञापितवान् अमीरः।

एकः भटः खड्गम् उन्नीय यदा तस्य समीपम् आगतवान्, तदा जनानां मध्यात् काचन युवती उत्थाय शीघ्रं वधास्थानम् आगतवती। सा तस्य युवकस्य खड्गधरस्य भटस्य च मध्ये स्थित्वा "मम हस्तौ छिन्दन्तु।

गानमग्नः अस्ति।

अमीरः तस्य समीपं गत्वा "अद्यावधि मया अनेके चोराः दृष्टाः। भवान् चोरः न इति मम संशयः। श्वः भवतः हस्तयोः छेदनार्थं यदा वधास्थानं नयन्ति, तदा तत्र मिलितानां सर्वेषां जनानां पुरतः पुनः एकवारं प्रश्नं पृच्छामि। तस्य धनिकस्य गृहं चौर्यार्थं न, किन्तु केनापि कार्यान्तरनिमित्तेन गतवान् इति वदतु। तस्य अल्पापराधस्य कृते एक-मासात्मकः दण्डः दीयते। अनन्तरं बन्धमुक्तं करिष्यामि। किमर्थं वृथा क्लेशम् अनु-भवति?" इति उक्तवान्।

"प्रभो, भवता अनुगृहीतः अहं कृतज्ञः अस्मि" इति उक्तवान् युवकः।



एषः युवकः असत्यं वदन् अस्ति'' इति उक्तवती कम्पमानेन स्वरेण।

अमीरः भटं दूरं प्रेषयित्वा, अश्रुपूर्णलोचनां युवतीं दृष्ट्वा ''वस्तुतः किं प्रवृत्तम् इति भवती वक्तुं शक्नोति वा? सत्यस्य प्रकटनम् एव मम मुख्यः उद्देशः'' इति पृष्टवान्।

तदा युवती अश्रूणि स्रावयन्ती जातं वृत्तान्तं कथितवती। ''किञ्चित् कालात् पूर्वं मम कुटुम्बं बस्रानगरे न आसीत्। अन्यस्मिन् नगरे आसीत्। तत्र मम गृहस्य पार्श्वे कस्य-चित् धनिकस्य गृहम् आसीत्। एषः युवकः तस्य धनिकस्य पुत्रः। द्वयोः कुटुम्बयोः परस्परं मैत्री आसीत्। अतः माम् एतस्मै दत्त्वा विवाहं कर्तुं सर्वे ज्येष्ठाः आलोचित-वन्तः।

किन्तु युवकस्य कुटुम्बं केनापि कारणेन आर्थिकदृष्ट्या हीनावस्थां प्राप्नोत्। तस्मिन् एव समये मम कुटुम्बं बस्रानगरम् आगत्य अत्र एव स्थिररूपेण स्थितम्। अनन्तरं द्वयोः कुटुम्बयोः सम्बन्धः गमनागमनं च विच्छिन्नम् अभवत्।

इदानीं दिनद्वयात् पूर्वं कार्यान्तरवशात् एषः बस्रानगरम् आगतवान्। रात्रौ केनचित् मार्गेण वासस्थानं प्रति गच्छन् आसीत्। तदा अकस्मात् धाराकारेण वृष्टिः आरब्धा। युवकः वृष्टितः आत्मानं रक्षितुं पार्श्वस्थस्य गृहस्य सोपानम् आरुह्य स्थितवान्। तत् गृहं पूर्वपरिचितायाः मम गृहम् एव आसीत्। किन्तु एषः तं विषयं न जानाति स्म।

वातायनसमीपे स्थिता अहम् अकस्मात् विद्युत्प्रभायां एतं दृष्ट्वा, द्वारम् उद्घाट्य, स्वीयं परिचयम् उक्त्वा, अन्तः नीतवती। तस्य आर्द्रशरीरस्य मार्जनार्थं वस्त्रं दत्त्वा, धर्तुम् अन्यवस्त्राणि अपि दत्तवती। तस्मिन् समये गृहे सर्वे निद्रामग्नाः आसन्।

आवां एकघण्टापर्यन्तं वार्तालापमग्नौ आस्व। बस्रानगरस्य अन्यधनिकस्य पुत्रेण सह मम विवाहः निश्चितः आसीत्। वार्तालापमध्ये अहम् एतं विषयम् अपि उक्तवती।

तत् सर्वं श्रुत्वा एषः हसन् ''एतस्यां रात्रौ

भवत्याः प्रकोष्ठे अहम् अस्मि किल ! यः कोऽपि मां पश्यति चेत् किं भवेत् !" इति पृष्टवान् ।

तदा अहम् अपि स्मयमाना "अस्मिन् समये अस्मदीयाः भवन्तं पश्यन्ति चेत्, झटिति अहं 'चोरः चोरः' इति आक्रोशं करोमि । मम गौरवरक्षणार्थं अहं चोरः इति भवता अपि अङ्गीकरणीयं भवति" इति उक्तवती ।

अनन्तरं किञ्चित्कालानन्तरं वृष्टिः स्थगिता । एषः प्रकोष्ठतः बहिः आगतवान् । तदा तत्र स्थितः एकः सेवकः एतं दृष्ट्वा चोरः इति आक्रोशं कृतवान् ।

गृहे निद्रामग्नाः सर्वे उत्थाय धावन्तं एतं निगृहीतवन्तः । मम जननीजनकादयः एतं जानन्ति । तथापि इदानीं गृहे उपस्थितः भावी बन्धुः स्वीयपुत्र्याः शीलविषये संशयं प्राप्नुयात् इति भयेन ते तूष्णीं स्थितवन्तः" इति ।

एतं वृत्तान्तं श्रुत्वा अमीरः आर्द्रं स्वीयं नेत्रद्वयं करवस्त्रेण अश्रुविमुक्तं कृत्वा, तत्र उपस्थितान् जनान् दृष्ट्वा "एषः युवकः महान् धीरः प्रामाणिकः अपि । सुशीलायाः कस्याश्चित् बालायाः उपरि मिथ्यारोपः मास्तु इति स्वीयहस्तयोः छेदनार्थं सिद्धः अस्ति । त्यागः नाम एषः ! मम पुत्री नास्ति । स्यात् चेत् ताम् एतस्मै एव दद्याम्" इति ।

उत्तरक्षणे जनानां समूहतः युवत्याः पिता अमीरस्य समीपम् आगत्य, तं नमस्कृत्य "प्रभो, मम पुत्रीम् एतस्मै युवकाय एव दत्वा विवाहं कर्तुम् अनुज्ञां ददातु । एषः कः इति जानन् अपि अहं तूष्णीम् आसम् । तदर्थं अहं लज्जाम् अनुभवामि । कृपया मां क्षाम्यतु" इति उक्तवान् ।

तस्य वचनं श्रुत्वा अमीरः सन्तुष्टः अभवत् । जनाः आनन्देन करताडनं कृतवन्तः । तस्मिन् एव दिने अमीरस्य समक्षम् एव युवतीयुवकयोः विवाहः सवैभवं सम्पन्नः ।



# स्काट्लेण्ड्देशीयाः वन्यमार्जाराः

स्काटलेण्ड्देशस्य उन्नताः पर्वताः, निर्मानुषानि अरण्यानि च प्राणिनाम् आहारान्वेषणे बहुधा उपकुर्वन्ति। अतः एव ब्रिटिष् द्वीपेषु अन्यत्र कुत्रापि अविद्यमानाः वन्यमार्जाराः स्काटलेण्ड् पर्वतेषु उपत्यकासु परिदृश्यन्ते। यत्र च मानवानां पीडा न स्यात्, जलादयः यथेष्टं यत्र प्राप्येरन् तत्र एते वन्यमार्जाराः निवासम् इच्छन्ति।

पूर्वं तु ब्रिटन्देशे सर्वत्र ये परिदृश्यन्ते स्म ते इदानीं मानवसञ्चारकारणतः उत्तरप्रान्तं प्राप्तवन्तः सन्ति।

मार्जाराणाम् अपेक्षया स्थूलाः, व्याघ्रशिशवः इव दृश्यमानाः एते वन्यमार्जाराः धूसर-वर्णयुताः। उन्नताः पादाः, रोमपूर्णं शरीरं, चतुरस्रं शिरः, पादोनमीटरपरिमितं पुच्छं- इति एषः एतेषाम् आकारः। पुच्छं परितः अङ्गुलीयकानि इव वलयानि दृश्यन्ते।

एते वृक्षकोटरेषु शिलाबिलेषु च निवसन्ति। त्वरितगत्या सञ्चरन्तः आहारं सम्पादयन्ति। रात्रौ दिने वा एकाकिनः एव सञ्चरन्ति। शशान् मूषकान् कपोतान् अन्यान् च प्राणिनः सहनया प्रतीक्षमाणाः उत्प्लुत्य आक्रम्य गृह्णन्ति। आहाराभावे कदाचित् नदीस्थान् मीनान् अपि चातुर्येण गृहीत्वा खादन्ति। वत्सरे एकवारं वसन्तकाले सन्तानम् उत्पादयन्ति।

बलयुतैः तीक्ष्णैः नखैः सहितान् एतान् पोष्यप्राणिनः इव शिक्षयितुं पालयितुं वा न शक्यते एव। शैशवावस्थायाम् एव एतान् पञ्जरे स्थापयामः चेदपि एते क्रूरस्वभावं न परित्यजन्ति। आहारदातुः हस्तम् एव नखैः छेदयन्ति एते।

मानवानां मृगयाविनोदकारणतः एतेषां सङ्ख्या दिने दिने क्षीयमाणा दृश्यते। अतः एतेषां मारणम् इदानीं निषिद्धम् अस्ति। अन्यच्च एते वन्यमार्जाराः वृक्षनाशकानां चिकोड-जातीयानां प्राणिनां सन्तानवृद्धिं नियन्त्रयन्ति।





# कठिनशब्दानां सान्दर्भिकाः अर्थाः ।

अनतिदूरे - Not far away
आन्दोलिका - Swing
आरक्षकस्थानकम् - Police station
उपचारवचनम् - Pleasantries
उष्ट्रः - Camel
कन्दुकम् - Ball
कलशः - A small pot
कीलयित्वा - Having locked
कुञ्चिका - Key
कृशकायः - Lean person
कृष्णाजिनम् - Deer skin
कोविदः - Learned man
चयनम् - Selection
चिता - Pyre
छदिका - Roof
दग्धः - Burnt
द्रोणी - Bucket
नवनीतम् - Butter
पञ्चषाः Five or six
परिचारिका - Maid Servant
प्रतिशतं - Percent
प्राप्तिपत्रम् - Receipt
बुद्धिभेदः - Confusion
मन्थानः - Churning rod
मेखला - A waist—belt of gold or silver
राङ्कवः - Shawl
लिपिकारः - Clerk
वराहः - Pig
विरललभ्यः - Rare
शाकटिकः - Cart man
शिखण्डी - Impotent
शिलाफलकम् - Inscription
सज्जः - Ready
सन्ततिः - Generation
समक्षम् - In the presence of
समालोचनामन्दिरम् - Meeting Hall
सामर्थ्यबाह्यम् - Out of reach
हस्ततालः - Clap
हृद्रोगी - Heart patient

## चित्रशीर्षिका-स्पर्धा  पारितोषिकं ५०/- रूप्यकाणि

विजितां शीर्षिकां मे-८६ मासे प्रकटयिष्यामः।





❀उपरितनं चित्रद्वयं पश्यन्तु। युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा मार्च-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। स्पर्धायां विजेता ५०/– रूप्यकात्मकं पारितोषिकं प्राप्स्यति। ❀ शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। ❀ अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः–

चन्दमामा (संस्कृतम्)
७३/२, 'अक्षरम्' रङ्गराव्मार्गः, शङ्करपुरम् बेङ्गलूरु–५६०००४

---

### 'जनवरी' मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः–

प्रथमचित्रम्– 'आनन्दानुभूतिः'
द्वितीयचित्रम्– 'आनन्दप्रतिमूर्तिः'

प्रेषकः– प्रदीपकुमार मिश्र, १३३, बि. एच्. एस्. अल्लापुर, अलहाबाद्-७

# भवन्तः जानन्ति वा? (उत्तराणि)

१. मलयासे (मडगास्कर्)। २. सिसली। ३. किस्तान् डाकुन्हा। ४. त्रिशतादधिकम्।
५. सप्तसहस्र-एकशत-षट् (७१०६)

Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.

# भोजनार्थम् आगच्छन्तु

| | |
|---|---|
| सीता - भोः ! पाकः सिद्धः । भोजनार्थम् आगच्छन्तु । | Look here, food is ready, come on. |
| उमेशः - कुमार ! उत्तिष्ठतु, भोजनं कुर्मः । | Kumar! Come on. We will have food. |
| कुमारः - न भोः, दशवादने भोजनं कृत्वा एव प्रस्थितवान् । | No! I finished my food at 10 and came here. |
| उ - दशवादने किल भोजनं कृतम् ? तत् इदानीम् एकवादने कथम् अवशिष्येत ? आगच्छतु, यावत् रोचते तावत् स्वीकरोतु । हस्तपादं प्रक्षालयतु । | Oh! you had food at 10! It is 1 O' clock now, your belly can't be full still! Come on, take whatever you can. Come on, wash your hands. |
| कु - नलिकासु सर्वदा जलं प्रवहति वा ? | You get water in your tap throughout? |
| उ - तथा न, गृहस्य उपरि जलाधारः अस्ति । अतः जलस्य विशेषसमस्या नास्ति । | No! we have an overhead tank. So water is not a big problem. |
| सी - चिरात् आगमनम् । निस्सङ्कोचं भोजनं करोतु । | You visit us only rarely. Please have no reservation. |
| उ - घृतं परिवेषितवती वा ? पर्पटद्वयं परिवेषयतु । | Did you serve ghee? Serve him a couple of papads. |
| कु - न न, एकं पर्याप्तम् । | No, No! One is enough. |
| उ - किं भो एतत् ? भवती परिवेषयतु तावत् । | I say what is it? Mother, serve one more. |
| सी - पायसं स्थालिकायां परिवेषयामि वा ? उत चषके ददामि ? | You want me to serve the pudding on to the plate or shall I give it in a cup? |
| कु - तदपि कृतं वा ? एतावता एव उदरं पूर्णम् । | Oh! It is also there! My belly is already full. |
| उ - एकचषकमितेन पायसेन किं भोः ? स्वीकरोतु, चमसम् अपि ददातु भवती । | What is this? Can't you take just one cup of pudding? Have it. Mother, please give him a spoon. |